तृतीयाध्यायस्य तृतीयपादे
एकादशाधिकरणमारचयति।

शाण्डिल्यविद्याकाण्वानां द्विविधैकविधाऽथवा ?।
द्विरुक्तेरेकशाखायां द्वैविध्यमिति गम्यते॥
एकं मनोमयत्वादिप्रत्यभिज्ञानतो भवेत्।
विद्याया विधिरेकत्र स्यादन्यत्र गुणे विधिः॥ ११॥

सम्भृतिद्युव्याप्त्यपि चातः॥ २३॥ सूत्रम्।
तृतीयाध्यायस्य तृतीयपादे
द्वादशाधिकरणमारचयति।

संहारः स्याद्व्यवस्था वा नाम्नोरहरहन्त्विति ?।
विद्यैकत्वेन संहारः स्यादध्यात्माधिदैवयोः॥
'तस्योपनिषद्' इत्येवं भिन्नस्थानत्वकीर्त्तनात्।
स्थितासीनगुरूपास्त्योरिव नाम्नोर्व्यवस्थितिः॥ १२॥

पुरुषविद्यायामिव चेतरेषामनाम्नानात्॥ २४॥ सूत्रम्।
तृतीयाध्यायस्य तृतीयपादे
त्रयोदशाधिकरणमारचयति।

आहार्या वा न वा तत्र संभृत्यादिविभूतयः ?।
आहार्या, ब्रह्मधर्मत्वात् शाण्डिल्यादाववारणात्॥
असाधारणधर्माणां प्रत्यभिज्ञाऽत्र नास्ति तत्।
अनाहार्या ब्रह्ममात्रसम्बन्धोऽतिप्रसञ्जकः॥ १३॥

वेधाद्यर्थभेदात्॥ २५॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
चतुर्दशाधिकरणमारचयति।

पुंविद्यैका विभिन्ना वा तैत्तिरीयकताण्डिनोः ?।
मरणावभृथत्वादिसाम्यादैकेति गम्यते॥
बहुना रूपभेदेन किञ्चित् साम्यस्य बाधनात्
न विद्यैक्यं, तैत्तिरीये ब्रह्मविद्याप्रशंसनात्॥ १४॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत् तदुक्तं ॥ २६॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
पञ्चदशाधिकरणमारचयति।

वेधमन्त्रप्रवर्ग्यादि विद्याङ्गमथवा न तु ?।
विद्यासन्निधिपाठेन विद्याङ्गे मन्त्रकर्मणी॥
लिङ्गेनान्यत्र मन्त्राणां वाक्येनापि च कर्मणाम्।
विनियोगात् सन्निधिस्तु बाध्योऽतो नाङ्गता तयोः॥ १५॥

साम्पराये तर्तव्याभावात् तथा ह्यन्ये॥ २७॥ छन्दत उभयाविरोधात्॥ २८॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
षोडशाधिकरणमारचयति।

उपायनमनाहार्यं हानाद् आह्रियतेऽथवा ?।
अश्रुतत्वादनाक्षेपाद्विद्याभेदाच्च नाहृतिः॥
विद्याभेदेऽप्यर्थवाद आहार्यः स्तुतिसाम्यतः।
हानस्य प्रत्यभिज्ञानादैकविंशादिवादवत्॥ १६॥

तृतीयाध्यायस्य तृतीयपादे
षोडशाधिकरणस्य द्वितीयवर्णकमाह।

विधूनन चालनं स्याद्धानं वा चालनं भवेत्?।
'दोधूयन्ते ध्वजाग्राणी'त्यादौ चालनदर्शनात्॥
हानमेव भवेद्वाक्यशेषेऽन्योपायनश्रवात्।
कर्त्तॄन ह्यपरित्यक्तमन्यं स्वीकर्त्तुमर्हति॥ १६॥

तृतीयाध्यायस्य तृतीयपादे
षोडशाधिकरणस्य तृतीयवर्णकमाह।

कर्मत्यागो मार्गमध्ये यदि वा मरणात्पुरा।
उत्तीर्य विरजां त्यागस्? तथा कौषीतकिश्रुतेः॥
कर्मप्राप्यफलाभावात् मध्ये साधनवर्जनात्।
ताण्डिश्रुतेः पुरा त्यागो, बाध्यः कौषीतकिक्रमः॥१६॥

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः॥ २९॥ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्॥ ३०॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
सप्तदशाधिकरणमारचयति।

उपास्तिबोधयोर्मार्गः समो यद्वा व्यवस्थितः?।
सम एवोत्तरो मार्ग एतयोः कर्मज्ञानवत्॥
देशान्तरफलप्राप्त्यै युक्तो मार्ग उपास्तिषु।
आरोग्यवद्बोधफले तेन मार्गो व्यवस्थितः॥ १७॥

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्॥ ३१॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
अष्टाविंशाधिकरणमारचयति ।

मार्गः श्रुतस्थलेष्वेव सर्वोपास्तिषु वा भवेत् ? ।
श्रुतेष्वेव प्रकरणात्, द्विःपाठोऽस्य वृथाऽन्यथा ॥
प्रोक्तो विद्यान्तरे मार्गो 'ये चेम' इति वाक्यतः ।
तेन बाध्यं प्रकरणं, द्विपाठश्चिन्तनाय हि ॥ १८ ॥

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
ऊनविंशाधिकरणमारचयति ।

ब्रह्मतत्त्वविदां मुक्तिः पाक्षिकी नियताऽथवा ? ।
पाक्षिक्य,ऽपान्तरतमप्रभृतेर्जन्मकीर्त्तनात् ॥
नानादेहोपभोक्तव्यमोघोपास्तिफलं बुधाः ।
मुक्ताधिकारपुरुषा मुच्यन्ते नियता ततः ॥१९ ॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् ॥ ३३॥
सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
विंशाधिकरणमारचयति।

निषेधानामसंहारः संहारो वा ? न संहृतिः ।
आनन्दादिवदात्मत्वं नैषां सम्भाव्यते यतः ॥
श्रुतानामश्रुतानाञ्च निषेधानां समा यतः ।
आत्मलक्षणता तस्मात् दार्ढ्यायास्तूपसंहृतिः ॥ २० ॥

इयदामननात् ॥ ३४ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
एकविद्याधिकरणमारचयति ।

'पिबन्तौ द्वा सुपर्णे'ति द्वे विद्ये अथवैकधीः ।
भोक्त्रीशौ, भोक्त्रभोक्तारावितिविद्ये उभे इमे ॥
पिबन्तौ भोक्त्रभोक्तारावित्युक्तं हि समन्वये ।
[illegible]प्रत्यभिज्ञानात् विद्यैका मन्त्रयोर्द्वयोः ॥ २१ ॥

अन्तरा भूतग्रामवत् स्वात्मनः ॥ ३५ ॥ अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
द्वाविद्याधिकरणमारचयति ।

विद्याभेदोऽथ विद्यैक्यं स्यादुषस्तकहोलयोः ।
समानस्य द्विराम्नानाद्विद्याभेदः प्रतीयते ।
सर्वान्तरत्वमुभयोर्नास्ति विद्यैकता ततः ।
शङ्काविशेषनुत्त्यै द्विःपाठस् 'तत्त्वमसी'तिवत् ॥ २२ ॥

व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे
त्वयोर्विद्याधिकरणमारचयति ।

व्यतिहारे स्वात्मरव्योरेकधा धीरुत द्विधा ।
वस्त्वैक्यादेकधैवास्य ध्यानीय व्यतिहारगीः ॥
एकोऽपि व्यतिहारोक्त्या धीर्द्विधेशस्य जीवता ।
[illegible]पास्त्यै वाचनिकी मूर्तिवद्ध्यानमार्थिकम् ॥ २३ ॥

शेष हि सत्त्वादयः ॥ २८ ॥ सूत्रम् ।
तृतीयाध्यायस्य तृतीयपादे
चतुर्विंशाधिकरणमारचयति ।

द्वे सत्यविद्ये एका वा यक्षरव्यादिवाक्ययोः ? ।
फलभेदादुभे लोकजयात् पापहृतेः पृथक् ॥
प्रकृताकर्षणादेका पापघातोऽङ्गधीफलम् ।
अर्थवादोऽथवा मुख्यो युक्तोऽधिकृतिकल्पकः ॥ २४ ॥

कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥ सूत्रम् ।
तृतीयाध्यायस्य तृतीयपादे
पञ्चविंशाधिकरणमारचयति ।

असंहृतिः संहृतिर्वा व्योम्नोर्दहरहार्दयोः ? ।
उपास्यज्ञेयभेदेन तद्गुणानामसंहृतिः ॥
उपास्ये क्वचिदन्यत्र स्तुतये वाऽस्तु संहृतिः ।
दहराकाश आत्मैव हृदाकाशोऽपि नेतरः ॥ २५ ॥

आदरादलोपः ॥ ४० ॥ उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ सूत्रम् ।
तृतीयाध्यायस्य तृतीयपादे
षड्विंशाधिकरणमारचयति ।

न लुप्यते लुप्यते वा प्राणाहुतिरभोजने ।
न लुप्यतेऽतिथेः पूर्वं भुञ्जीतेत्यादरोक्तितः ॥
भुज्यर्थान्नोपजीवित्वात्तल्लोपे लोप इष्यते ।
भुक्तिपक्षे पूर्वभुक्तावादरोऽप्युपपद्यते ॥ २६ ॥

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे

सप्तविंशाधिकरणमारचयति ।

नित्या अङ्गावबद्धाः स्युः काम्यास्त्वनियता उत ? ।
पर्णवत् क्रतुसम्बन्धो वाक्यान्नित्यास्ततो मताः ॥
पृथक्फलश्रुतेर्नैता नित्या गोदोहनादिवत् ।
'उभौ कुरुत' इत्युक्तं कर्मोपास्त्यनुपासिनोः ॥ २७ ॥

प्रदानवदेव तदुक्तम् ॥ ४३ ॥ सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे

अष्टाविंशाधिकरणमारचयति ।

एकीकृत्य पृथग् वा स्याद् वायुप्राणानुचिन्तनम् ? ।
तत्त्वाभेदात्तयोरेकीकरणेनानुचिन्तनम् ॥
अवस्थाभेदतोऽध्यात्ममधिदैवं पृथक् श्रुतेः ।
प्रयोगभेदो राजादिगुणकेन्द्रप्रदानवत् ॥ २८ ॥

लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि ॥ ४४ ॥ पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४५ ॥ अतिदेशाच्च ॥ ४६ ॥ विद्यैव तु निर्धारणात् ॥ ४७ ॥ दर्शनाच्च ॥ ४८ ॥ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥ अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तम् ॥ ५० ॥ न सामान्यादप्युपलब्धेर्मृत्युवत् न हि लोकापत्तिः ॥ ५१ ॥ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः । ५२ । सूत्रम् ।

तृतीयाध्यायस्य तृतीयपादे

एकोनत्रिंशाधिकरणमारचयति ।

कर्मशेषाः स्वतन्त्रा वा मनश्चित्प्रमुखाग्नयः ? ।
कर्मशेषाः, प्रकरणात् लिङ्गमन्यार्थदर्शनम् ॥

उक्तेष विधिगास्तिङ्गादेव श्रुत्या च वाक्यतः।
बाध्यं प्रकरणं तस्मात् स्वतन्त्रं वह्निचिन्तनम् ॥ २९ ॥

एक आत्मनः शरीरे भावात् ॥ ५३ ॥ व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ सूत्रम्।

तृतीयाध्यायस्य
त्रिंशाधिकरणमारचयति।

आत्मा देहस्तदन्यो वा? चैतन्यं मदशक्तिवत्।
भूतमेलनजं देहे नान्यस्त्वात्मा वपुस्ततः॥
भूतोपलब्धिर्भूतेभ्यो विभिन्ना विषयित्वतः।
सैवात्मा भौतिकाद्देहादन्योऽसौ परलोकभाक् ॥ ३० ॥

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥ सूत्रम्।

तृतीयाध्यायस्य तृतीयपादे
एकत्रिंशाधिकरणमारचयति।

उक्थादिधीः स्वशाखाङ्गेष्वेवान्यत्रापि वा भवेत्?।
सान्निध्यात् स्वस्वशाखाङ्गेष्वेवासौ व्यवतिष्ठते।
उक्थोद्गीथादिसामान्यं तत्तच्छब्दैः प्रतीयते।
श्रुत्या च सन्निधेर्बाधस्ततोऽन्यत्रापि यात्यसौ ॥ ३१ ॥

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ सूत्रम्॥

तृतीयाध्यायस्य तृतीयपादे
द्वात्रिंशाधिकरणमारचयति

ध्येयो वैश्वानरांशोऽपि ध्यातव्यः कृत्स्न एव वा ?।
अङ्गेषूपास्तिफलयोर्दृष्टत्वादंशधीरपि ॥
उपक्रमावसानाभ्यां समस्तस्यैव चिन्तनम्।
अङ्गोपास्तिफले तुल्ये प्रत्येकोपास्तिनिन्दनात् ॥ ३२ ॥

नानाशब्दादिभेदात् ॥ ५८ ॥ सूत्रम्।
तृतीयाध्यायस्य तृतीयपादे
त्रयस्त्रिंशाधिकरणमारचयति।

न भिन्ना उत भिद्यन्ते शाण्डिल्यदहरादय ?।
समस्तोपासनश्रैष्ठ्यात् ब्रह्मैक्यादप्यभिन्नता ॥
कृत्स्नोपास्तेरशक्यत्वाद् गुणैर्नापृथक्त्वत।
दहरादीनि भिद्यन्ते पृथक् पृथगुपक्रमात् ॥ ३३ ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ सूत्रम्।
तृतीयाध्यायस्य तृतीयपादे
चतुस्त्रिंशाधिकरणमारचयति।

अहङ्ग्रहेष्वनियमो विकल्पे नियमोऽथवा ?।
नियामकस्याभावेन याथाकाम्यं प्रतीयताम् ॥
ईशसाक्षात्कृतेरेकविद्ययैव प्रसिद्धित।
अन्यानर्थक्यविक्षेपौ विकल्पस्य नियामकौ ॥ ३४ ॥

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥ सूत्रम्।
तृतीयाध्यायस्य तृतीयपादे
पञ्चत्रिंशाधिकरणमारचयति।

प्रतीकेषु विकल्पः स्याद् याथाकाम्येन वा मितिः ? ।
अहंग्रहेष्विवैतेषु साक्षात्कृत्यै विकल्पनम् ॥
'देवो भूत्वे'तिवक्राच काचित् साक्षात्कृती मितिः ।
याथाकाम्यमतोऽमीषां समुच्चयविकल्पयोः ॥ ३५ ॥

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ शिष्टेश्च ॥ ६२ ॥ समाहारात् ॥६३॥ गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥ न वा तत् सहभावाश्रुतेः ॥ ६५ ॥ दर्शनाच्च ॥ ६६ ॥ सूत्रम् ।

इति तृतीयाध्यायस्य तृतीयपादः ।

---

तृतीयाध्यायस्य तृतीयपादे

षट्त्रिंशदधिकरणमारचयति ।

समुच्चयोऽङ्गबद्धेषु याथाकाम्येन वा मितिः ? ।
समुच्चितत्वादङ्गानां तद्बद्धेषु समुच्चयः ॥
'ग्रह गृहीत्वा स्तोत्रस्यारम्भ' इत्यादिवन्नहि ।
अश्रूयते सहभावोऽत्र याथाकाम्यं ततो भवेत् ॥ ३६ ॥

इति तृतीयाध्यायस्य तृतीयपादः ॥ ० ॥

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥ आचारदर्शनात् ॥ ३ ॥ तच्छ्रुतेः ॥ ४ ॥ समन्वारम्भणात् ॥ ५ ॥ तद्वतो विधानात् ॥ ६ ॥ नियमाच्च ॥ ७ ॥ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ तुल्यन्तु दर्शनम् ॥ ९ ॥ असार्वत्रिकी ॥ १० ॥ विभागः शतवत् ॥ ११ ॥ अध्ययनमात्रवतः ॥ १२ ॥ नाविशेषात् ॥ १३ ॥ स्तुतयेऽनुमतिर्वा ॥ १४ ॥

कामकारेण चैके ॥ १५ ॥ उपमर्दं च ॥ १६ ॥ ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
प्रथमाधिकरणमारचयति।

क्रत्वर्थमात्मविज्ञानं स्वतन्त्रं वाऽऽत्मनो यतः।
देहातिरेकमज्ञात्वा न कुर्यात् क्रतुगं ततः॥
नाद्वैतबुद्धेः कर्महेतुर्हन्ति प्रत्युत कर्म सा।
आचारो लोकसंग्राही स्वतन्त्रा ब्रह्मधीस्ततः॥ १ ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ विधिर्वा धारणवत् ॥ २० ॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणमारचयति।

नास्त्यूर्ध्वरेता किं वास्ति? नास्त्यसावविधानतः।
वीरघाते विधेः क्ष्मावन्धपांग्वादिगा स्मृतिः॥
अस्त्यपूर्वविधेः क्ष्मिर्वीरहाऽनग्निको गृही।
अन्धादेः पृथगुक्तत्वात् स्वस्थानां श्रूयते विधिः॥ २ ॥

तृतीयाध्यायस्य चतुर्थपादे
द्वितीयाधिकरणस्य द्वितीयवर्णकमारचयति।

लोकस्थाश्रमी ब्रह्मनिष्ठामर्हति वा नवा?।
यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात्॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथम्।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः॥ २ ॥

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ भावशब्दाच्च ॥२२॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
तृतीयाधिकरणमारचयति ।

स्तोत्रं रसतमत्वादि ध्येयं वा गुणवर्णनात् ? ।
'जुहूरादित्य' इत्यादाविव कर्माङ्गसंस्कृतिः ॥
भिन्नप्रकरणस्थत्वान्नाङ्गविध्येकवाक्यता ।
'उपासीतेति' विध्युक्तेर्ध्येयं रसतमादिकम् ॥ ३ ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
चतुर्थाधिकरणमारचयति ।

पारिप्लवार्थमाख्यानं किं वा विद्यास्तुतिः ? स्तुतेः ।
ज्यायोऽनुष्ठानशेषत्वं तेन पारिप्लवार्थता ॥
'मनुर्वैवस्वतो राजे'त्येवं तत्र विशेषणात् ।
अत्र विद्यैकवाक्यत्वभावाद्विद्यास्तुतिर्भवेत् ॥ ४ ॥

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे
पञ्चमाधिकरणमारचयति ।

आत्मबोधः फले कर्मापेक्षो नो वा ह्यपेक्षते ? ।
अङ्गिनोऽङ्गेष्वपेक्षायाः प्रयाजादिषु दर्शनात् ॥
अविद्यातमसोर्ध्वस्तौ दृष्टं हि ज्ञानदीपयोः ।
नैरपेक्ष्यं ततोऽस्यापि विद्या कर्मानपेक्षिणी ॥ ५ ॥

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ शमदमाद्युपेत स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

तृतीयाध्यायस्य चतुर्थपादे

षष्ठाधिकरणमारचयति ।

उत्पत्तावनपेक्षेयमुत कर्माण्यपेक्षते ? ।
फले यथाऽनपेक्षैवमुत्पत्तावनपेक्षता ॥
यज्ञशान्त्यादिसापेक्षं विद्याजन्म श्रुतिद्वयात् ।
फलेऽनपेक्षितोऽप्यश्वो रथे यद्वदपेक्ष्यते ॥ ६ ॥

सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥ अबाधाच्च ॥ २९ ॥ अपि च स्मर्यते ॥ ३० ॥ शब्दश्चातोऽकामकारे ॥ ३१ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे

सप्तमाधिकरणमारचयति

सर्वान्नविधिः प्राणविदोऽनुज्ञाऽथवाऽऽपदि ? ।
अपूर्वत्वेन सर्वान्नभुक्तिर्ध्यातुर्विधीयते ॥
श्वाद्यन्नभोजनाशक्तेः शास्त्राच्च भोज्यवारणम् ।
आपदि प्राणरक्षार्थमेवानुज्ञायतेऽखिलम् ॥ ७ ॥

विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥ सहकारित्वेन च ॥ ३३ ॥ सर्वथापि त एवोभयलिङ्गात् ॥ ३४ ॥ अनभिभवं च दर्शयति ॥ ३५ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थपादे ।

अष्टमाधिकरणमारचयति ।

विद्यार्थमाश्रमार्थं च द्विःप्रयोगोऽथवा सकृत् ? ।
प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते ॥

आश्रमानभुक्तस्य प्राप्तिः स्याद्विद्यार्थेनाश्रमस्तथा ।
अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मत ॥ ८ ॥

अन्तरा चापि तु तद्दृष्टे ॥ ३६ ॥ अपि च स्मर्यते ॥ ३७ ॥ विशेषानुग्रहश्च ॥ ३८ ॥ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थ पादे
नवमाधिकरणमारचयति ।

नास्त्यनाश्रमिणो ज्ञानमस्ति वा ? नैव विद्यते ।
धीशुद्धर्थाश्रमित्वस्य ज्ञानहेतोरभावतः ॥
अस्त्येव, सर्वसम्बन्धिजपादेश्चित्तशुद्धित ।
श्रुता हि विद्या रैकादेराश्रमे त्वतिशुद्धता ॥ ९ ॥

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रूपाभावेभ्य ॥ ४० ॥ सूत्रम ।

तृतीयाध्यायस्य चतुर्थ पादे
दशमाधिकरणमारचयति ।

अवरोहोऽस्त्याश्रमिणा नवा ? रागात्, स विद्यते ।
पूर्वधर्मश्रद्धया वा यथारोहस्तथैच्छिक ॥
रागस्यातिनिषिद्धत्वाद्विहितस्यैव धर्मत ।
आरोहनियमोक्त्यादेर्नावरोहोऽस्त्यशास्त्रत ॥ १० ॥

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥ उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥ सूत्रम् ।

तृतीयाध्यायस्य चतुर्थ पादे
एकादशाधिकरणमारचयति ।

भ्रष्टोर्द्ध्वरेतसो नास्ति प्रायश्चित्तमथास्ति वा ?।
अदृष्टनोक्तेर्नास्त्येव व्रतिनो गर्द्दभ पशुः॥
उपपातकमेवैतत् व्रतिनो मधुमासवत्।
प्रायश्चित्ताच्च संस्कारात् शुद्धिर्यत्नपरं वचः॥ ११॥

बहिस्तूभयथापि स्मृतेराचाराच्च॥ ४३॥ सूत्रम्।
तृतीयाध्यायस्य चतुर्थपादे
द्वादशाधिकरणमारचयति।

शुद्धः शिष्टैरुपादेयस्त्याज्यो वा दोषहानितः ?।
उपादेयोऽन्यथा शुद्धिः प्रायश्चित्तकृता वृथा॥
आमुष्मिकी च शुद्धिः स्यात्तं शिष्टास्त्यजन्ति तम्।
प्रायश्चित्तादृष्टिवाक्यादशुद्धिस्त्वैहिकीष्यते॥ १२॥

स्वामिनः फलश्रुतेरित्यात्रेयः॥ ४४॥ आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते॥ ४५॥ श्रुतेश्च॥ ४६॥ सूत्रम्।
तृतीयाध्यायस्य चतुर्थपादे
त्रयोदशाधिकरणमारचयति।

अङ्गध्यानं याजमानमार्त्विज्यं वा? यतः फलम्।
ध्यातुरेव श्रुतं, तस्मात् याजमानमुपासनम्॥
'ब्रूयादेवविदुद्गाते'त्यार्त्विज्यत्वं स्फुटं श्रुतम्।
क्रीतत्वादृत्विजस्तेन कृतं स्वामिकृतं भवेत्॥ १३॥

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्॥ ४७॥ कृत्स्नभावात्तु गृहिणोपसंहारः॥ ४८॥ मौनवदितरेषामप्युपदेशात्॥ ४९॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
चतुर्दशाधिकरणमारचयति

अविधेय विधेयं वा मौनम्? तत्र विधीयते।
प्राप्तं पाण्डित्यतो मौनं, ज्ञानवाच्युभयं यतः॥
निरन्तरज्ञाननिष्ठा मौनं पाण्डित्यतः पृथक्।
विधेयं तद्भेददृष्टिप्राबल्ये तन्निवृत्तये॥ १४॥

अनाविष्कुर्वन्नन्वयात्॥ ५०॥ सूत्रम्।
तृतीयाध्यायस्य चतुर्थपादे
पञ्चदशाधिकरणमारचयति।

बाल्यं वयः काकचारो धीशुद्धिर्वा? प्रसिद्धितः।
वयस्त्वस्याविधेयत्वे कामचारोऽस्तु नेतरत्॥
मननस्योपयुक्तत्वाद्भावशुद्धिर्विवक्षिता।
अत्यन्तानुपयोगित्वाद्विरुद्धत्वाच्च न द्वयम्॥ १५॥

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्॥ ५१॥ सूत्रम्।
तृतीयाध्यायस्य चतुर्थपादे
षोडशाधिकरणमारचयति।

इहैव नियतं ज्ञानं पाक्षिकं वा? नियम्यते।
तथाभिसन्धेर्यज्ञादिः क्षीणो विविदिषाजनौ॥
असति प्रतिबन्धेऽत्र ज्ञानं जन्मान्तरेऽन्यथा।
'श्रवणाये'त्यादिशास्त्राद्वामदेवोद्भवादपि॥ १६॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः॥ ५२॥ सूत्रम्।

तृतीयाध्यायस्य चतुर्थपादे
सप्तदशाधिकरणमारचयति।

मुक्तिः सातिशया नो वा? फलत्वाद्ब्रह्मलोकवत्।
स्वर्गवत् फलभेदेन मुक्तिः सातिशयैव हि॥
ब्रह्मैव मुक्तिर्न ब्रह्म क्वचित् सातिशयं श्रुतम्।
अत एकविधा मुक्तिर्वेधसो मनुजस्य वा॥ १७॥

इति तृतीयाध्यायस्य चतुर्थपादः।

आवृत्तिरसकृदुपदेशात्॥ १॥ लिङ्गाच्च॥ २॥ सूत्रम्।
चतुर्थाध्यायस्य प्रथमपादे
प्रथमाधिकरणमारचयति।

श्रवणाद्या सकृत्कार्या आवर्त्या वा? सकृद्, यतः।
शास्त्रार्थस्तावता सिध्येत् प्रयाजादौ सकृत्कृते॥
आवर्त्या दर्शनान्तास्ते तण्डुलान्तावघातवत्।
दृष्टेऽत्र सम्भवत्यर्थे नादृष्टं कल्प्यते बुधैः॥ १॥

आत्मेति तूपगच्छन्ति ग्राहयन्ति च॥ ३॥ सूत्रम्।
चतुर्थाध्यायस्य प्रथमपादे
द्वितीयाधिकरणमारचयति।

ज्ञाता स्वात्मतया ब्रह्म ग्राह्यमात्मतयाऽथवा?।
अन्यत्वेन विजानीयाद्दुःखदुःखिविरोधतः॥
औपाधिको विरोधोऽत आत्मत्वेनैव गृह्यताम्।
गृह्णन्त्येव महावाक्यैः स्वशिष्यान् ग्राहयन्ति च॥ २

न प्रतीकेन हि सः ॥ ४ ॥ सूत्रम्।
चतुर्थाध्यायस्य प्रथमपादे
तृतीयाधिकरणमारचयति।

प्रतीकेऽहन्दृष्टिरस्ति न वा ? ब्रह्माविभेदतः।
जीवप्रतीकयोर्ब्रह्मद्वाराऽहन्दृष्टिरिष्यते ॥
प्रतीकत्वोपासकत्वहानिर्ब्रह्मैक्यवीक्षणे।
अवीक्षणे तु भिन्नत्वान्नास्त्याहन्दृष्टियोग्यता ॥ ३ ॥

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ सूत्रम्।
चतुर्थाध्यायस्य प्रथमपादे
चतुर्थाधिकरणमारचयति।

किमन्यधीर्ब्रह्मणि स्यादन्यस्मिन् ब्रह्मधीरुत ?।
अन्यदृष्ट्योपासनीयं ब्रह्मात्र फलदत्वत ॥
उत्कर्षेतिपरत्वाभ्यां ब्रह्मदृष्ट्याऽन्यचिन्तनम्।
अन्योपास्त्या फलं दत्ते ब्रह्म तिथ्याद्युपास्तिवत् ॥ ४ ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ सूत्रम्।
चतुर्थाध्यायस्य प्रथमपादे
पञ्चमाधिकरणमारचयति।

आदित्यादावङ्गदृष्टिरङ्गे रव्यादिधीरुत ?।
नोत्कर्षो ब्रह्मजत्वेन द्वयोस्तेनैच्छिकी मतिः ॥
आदित्यादिधियाऽङ्गानां संस्कारे कर्मणः फले।
युज्यतेऽतिशयस्तस्मादङ्गेष्वर्कादिदृष्टयः ॥ ५ ॥

आसीनः सम्भवात् ॥ ७ ॥ ध्यानाच्च ॥ ८ ॥ अचलत्वञ्चापेक्ष्य ॥ ९ ॥ स्मरन्ति च ॥ १० ॥ सूत्रम् ।

चतुर्थाध्यायस्य प्रथमपादे

षष्ठाधिकरणमारचयति ।

नास्त्यासनस्य नियम उपास्तावुत विद्यते ? ।

न देहस्थितिसापेक्षं मनोऽतो नियमो न हि ॥

शयनोत्थानगमनैर्विक्षेपस्यानिवारणात् ।

धीसमाधानहेतुत्वात् परिशिष्यत आसनम् ॥ ६ ॥

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ सूत्रम् ।

चतुर्थाध्यायस्य प्रथमपादे

सप्तमाधिकरणमारचयति ।

दिग्देशकालनियमो विद्यतेऽथ न विद्यते ? ।

विद्यते, वैदिकत्वेन कर्मस्वेतस्य दर्शनात् ॥

एकाग्रस्याविशेषेण दिगादिर्न नियम्यते ।

'मनोऽनुकूल' इत्युक्तो दृष्टार्थं देशभाषणम् ॥ ७ ॥

आप्रयाणात्तत्रापि हि दृष्टम् ॥ १२ ॥ सूत्रम् ।

चतुर्थाध्यायस्य प्रथमपादे

अष्टमाधिकरणमारचयति ।

उपास्तीनां यावदिच्छमावृत्तिः स्यादुताऽऽमृति ? ।

उपास्त्यर्थाभिनिष्पत्तेर्यावदिच्छं न तूपरि ॥

अन्त्यप्रत्ययतो जन्म भाव्यतस्तत्प्रसिद्धये ।

आमृत्यावर्तनं न्याय्यं सदा तद्भाववाक्यतः ॥ ८ ॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥१३॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे

नवमाधिकरणमारचयति।

ज्ञानिनः पापलेपोऽस्ति नास्ति वाऽनुपभोगतः ?।
'आनाश' इति शास्त्रेषु घोषाल्लोपोऽस्य विद्यते ॥
अकर्त्रात्मधिया वस्तुमहिम्नैव न लिप्यते।
अश्लेषनाशावप्युक्तावङ्गे घोषस्तु सार्थकः ॥ ८ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे

दशमाधिकरणमारचयति।

पुण्येन लिप्यते नो वा ? लिप्यते, ऽस्य श्रुतत्वतः।
न हि श्रौतेन पुण्येन श्रौतं ज्ञानं विरुध्यते ॥
अलेपो वस्तुसामर्थ्यात् समानः पुण्यपापयोः।
श्रुतं पुण्यं पापतया तरणञ्च समं श्रुतम् ॥ १० ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे

एकादशाधिकरणमारचयति।

आरब्धे नश्यतो नो वा ? सञ्चिते इव नश्यतः।
उभयत्राप्यकर्तृत्वतद्बोधौ सदृशौ खलु ॥
आदेहपातं संसारश्रुतेरनुभवादपि।
इषुचक्रादिदृष्टान्तात् नैवारब्धे विनश्यतः ॥ ११ ॥

अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥ अतोऽन्यापि ह्येकेषामुभयो ॥ १७ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
द्वादशाधिकरणमारचयति।

नश्येन्नोवाऽग्निहोत्रादि नित्यं कर्म्म ? विनश्यति,।
येतोऽयं वस्तुमहिमा न क्वचित् प्रतिहन्यते ॥
अनुष्ठानफलाऽस्य नाशोऽप्यन्यो न नश्यति।
विद्यायामुपयुक्तत्वान्नाश्यश्लेषस्तु काम्यवत् ॥ १२ ॥

यदेव विद्ययेति हि ॥ १८ ॥ सूत्रम्।

चतुर्थाध्यायस्य प्रथमपादे
त्रयोदशाधिकरणमारचयति।

किमङ्गोपास्तिसयुक्तमेव विद्योपयोग्युत ?।
केवलञ्च प्रशस्तत्वात् सोपास्त्येवोपयुज्यते ॥
'केवलं वीर्य्यवद्विद्यासंयुक्तं वीर्य्यवत्तरम्'।
इति श्रुतेस्तारतम्यादुभयं ज्ञानसाधनम् ॥ १३ ॥

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥ सूत्रम्।

इति चतुर्थाध्यायस्य प्रथमपादः।

चतुर्थाध्यायस्य द्वितीयपादे
चतुर्दशाधिकरणमारचयति।

बहुजन्मप्रारब्धयुक्तानां नास्त्युतास्ति मुक् ?।
विद्यालोपे कृतं कर्म्म फलदं, तेन नास्ति मुक् ॥

किं जीवादथवा देहात् प्राणोत्क्रान्तिर्निवार्य्यते ?।
जीवान्निवारणं युक्तं, जीवेद्देहोऽन्यथा सदा।
तप्ताश्मजलवद्देहे प्राणानां विलयः स्मृतः ॥
उच्छ्वयत्यत्र देहोऽतो देहात् सा विनिवार्य्यते ॥ ६ ॥

तानि परे तथाह्याह ॥ १५ ॥ सूत्रम्।
चतुर्थाध्यायस्य द्वितीयपादे
सप्तमाधिकरणमारचयति।

अस्य वागादयः स्वस्वहेतौ लीना परेऽथवा ?।
'गताः कलाः' इति श्रुत्या स्वस्वहेतुषु तल्लयः ॥
नद्यब्धिलयसाम्योक्तेर्विद्वद्दृष्ट्या लयः परे।
अन्यदृष्टिपरं शास्त्रं गता इत्याद्युदाहृतम् ॥ ७ ॥

अविभागो वचनात् ॥ १६ ॥ सूत्रम्।
चतुर्थाध्यायस्य द्वितीयपादे
अष्टमाधिकरणमारचयति।

तल्लयः शक्तिशेषेण निःशेषेणाथवाऽऽत्मनि ?।
शक्तिशेषेण युक्तोऽसावज्ञानिष्वेतदीक्षणात् ॥
नामरूपविभेदोक्तेर्निःशेषेणैव संलयः।
अज्ञे जन्मान्तरार्थन्तु शक्तिशेषत्वमिष्यते ॥ ८ ॥

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ सूत्रम्।
चतुर्थाध्यायस्य द्वितीयपादे
नवमाधिकरणमारचयति।

अविशेषो विशेषो वा स्यादुत्क्रान्तेरुपासितुः ।
ह्रग्रद्योतनसाम्योक्तेरविशेषोऽन्यनिर्गमात् ॥
मूर्द्धन्ययैव नाड्याऽसौ व्रजेन्नाडीविचिन्तनात् ।
विद्यासामर्थ्यतश्चापि विशेषोऽस्त्यन्यदर्शनात् ॥ ९ ॥

रश्म्यनुसारी ॥ १८ ॥ निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वात् दर्शयति च ॥ १९ ॥ सूत्रम् ।

चतुर्थाध्यायस्य द्वितीयपादे
दशमाधिकरणमारचयति ।

अह्न्येव मृतो रश्मिं याति निश्यपिवा निशि ? ।
सूर्य्यरश्मेरभावेन मृतोऽह्न्येव याति तम् ।
यावद्देहं रश्मिनाड्योर्युक्तो ग्रीष्मे क्षपास्वपि ।
देहदाहात् श्रुतत्वाच्च रश्मीन्निश्यपि यात्यसौ ॥१० ॥

अतश्चायनेऽपि दक्षिणे ॥ २० ॥ योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥

इति चतुर्थाध्यायस्य द्वितीयपाद ।

चतुर्थाध्यायस्य द्वितीयपादे
एकादशाधिकरणमारचयति ।

अयने दक्षिणे मृत्वा धीफलं नैत्यथैति वा ? ।
नैत्युत्तरायणाधीनेर्भीष्मस्यापि प्रतीक्षणात् ॥
आतिवाहिकदेवोक्तेर्वरख्यात्यै प्रतीक्षणात् ।
फलैकान्त्याच्च विद्यायाः फलं प्राप्नोत्युपासकः ॥ ११ ॥

इति चतुर्थाध्यायस्य द्वितीयः पादः

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ सूत्रम्।
चतुर्थाध्यायस्य तृतीयपादे
प्रथमाधिकरणमारचयति ।

नानाविधो ब्रह्मलोकमार्गो यद्वार्चिरादिकः ?
नानाविधः स्याद्विद्यासु वर्णनादन्यथान्यथा ॥
एक एवार्चिरादिः स्यान्नानाश्रुत्युक्तपूर्वकः।
यतः पञ्चाग्निविद्याया विद्यान्तरवतां श्रुतः ॥ १ ॥

वायुमब्दादविशेषविशेषाभ्याम्॥ २ ॥ सूत्रम्।
चतुर्थाध्यायस्य तृतीयपादे
द्वितीयाधिकरणमारचयति ।

सन्निवेशयितुं वायुरत्राशक्योऽथ शक्यते ?।
न शक्यो वायुलोकस्य श्रुतक्रमविवर्जनात् ॥
वायुश्छिद्राद्विनिष्क्रम्य स आदित्यं व्रजेदिति।
श्रुतेरर्वाग्रवेर्वायुर्देवलोकस्ततोऽपरधः ॥ २ ॥

तडितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥ सूत्रम्।
चतुर्थाध्यायस्य द्वितीयपादे
तृतीयाधिकरणमारचयति ।

वरुणादेः सन्निवेशो नास्ति तत्राथ विद्यते ?। -
नास्ति, वायोरिवैतस्य व्यवस्थाश्रुत्यभावतः ॥
विद्युत्सम्बन्धिवृष्टिस्थनीरस्याधिपतित्वतः।
वरुणो विद्युतस्तूर्ध्वं तत इन्द्रप्रजापती ॥ ३ ॥

आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥ उभयव्यामोहात् तत्सिद्धेः ॥ ५ ॥
वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ सूत्रम्

चतुर्थाध्यायस्य तृतीयपादे
चतुर्थाधिकरणमारचयति ।

मार्गचिह्नं भोगभुवो नेतारो वाऽर्चिरादयः ?।
आद्यौ स्यातां, मार्गचिह्नसारूप्याल्लोकशब्दतः ॥
'अन्ते गमयती'त्युक्तेर्नेतारस्तेषु चेष्टया ।
निर्द्दिष्टोऽस्त्यत्र लोकाख्या तन्निवासिजनान् प्रति ॥४॥

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ विशेषितत्वाच्च ॥८॥ सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥ कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥ स्मृतेश्च ॥ ११ ॥ परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ दर्शनाच्च ॥ न च कार्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥ सूत्रम् ।

चतुर्थाध्यायस्य तृतीयपादे
पञ्चमाधिकरणमारचयति ।

परं ब्रह्माथ वा कार्यमुदङ्मार्गेण गम्यते ।
मुख्यत्वादमृतत्वोक्तेर्गम्यते परमेव तत् ॥
कार्यं स्यात्, गतियोग्यत्वात् परस्मिंस्तदसम्भवात् ।
सामीप्याद्ब्रह्मशब्दोक्तिरमृतत्वं क्रमाद्भवेत् ॥ ५ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात् तत्क्रतुश्च ॥ १५ ॥ विशेषञ्च दर्शयति ॥ १६ ॥ सूत्रम् ।

इति चतुर्थाध्यायस्य तृतीयः पादः ।

---

चतुर्थाध्यायस्य तृतीयपादे
षष्ठाधिकरणमारचयति ।

प्रतीकोपासकान् ब्रह्मलोकं नयति वा नवा ।
अविशेषश्रुतेरेतान् ब्रह्मोपासकवन्नयेत् ॥

ब्रह्मक्रतोरभावेन प्रतीकार्हफलश्रवात्।
न, तन्नयति पञ्चाग्निविदो नयति तच्छ्रुतेः ॥ ६ ॥

इति चतुर्थाध्यायस्य तृतीयपादः ॥ ० ॥

सम्पद्याविर्भावः स्वेनशब्दात् ॥ १ ॥ मुक्तः प्रतिज्ञानात् ॥ २ ॥ आत्मा प्रकरणात् ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
प्रथमाधिकरणमारचयति।

नाकवन्नूतनं मुक्तिरूपं यद्वा पुरातनम्?।
अभिनिष्पत्तिवचनात् फलत्वादपि नूतनम्॥
'स्वेन रूपेणेति' वाक्ये स्वशब्दात्तत् पुरातनम्।
आविर्भावोऽभिनिष्पत्तिः फलञ्चाज्ञानहानितः ॥ १ ॥

अविभागेन दृष्टत्वात् ॥ ४ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे।
द्वितीयाधिकरणमारचयति।

मुक्तरूपाद्ब्रह्म भिन्नमभिन्नं वाऽथ भिद्यते?।
'सम्पद्य ज्योतिरि'त्येवं कर्मकर्तृभिदोक्तितः॥
अभिनिष्पन्नरूपस्य 'स उत्तमः पुमानिति'।
ब्रह्मत्वोक्तेरभिन्नं तद्भेदोक्तिरुपचारतः ॥ २ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥ एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ७ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे
तृतीयाधिकरणमारचयति ।

क्रमेण युगपद्वाऽस्य सविशेषाविशेषकौ १ ।
विरुद्धत्वात् कालभेदाद्व्यवस्था श्रुतयोस्तयोः ॥
मुक्तामुक्तदृशोर्भेदादव्यवस्था सम्भवे सति ।
अविरुद्धं यौगपद्यमश्रुतं क्रमकल्पनम् ॥ ३ ॥

सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥ अत एव चानन्याधिपतिः ॥ ९ ॥
सूत्रम् ।

चतुर्थाध्यायस्य चतुर्थपादे
चतुर्थाधिकरणमारचयति ।

भोग्यसृष्टावस्ति बाह्यो हेतुः सङ्कल्प एव वा ।
ग्रामादिकवैषम्याद्धेतुर्बाह्योऽस्ति लोकवत् ॥
'सङ्कल्पादेव पितरः' इति श्रुत्याऽवधारणात् ।
सङ्कल्प एव हेतुः स्याद्वैषम्याच्चानुचिन्तनात् ॥ ४ ॥

अभावं बादरिराह ह्येवम् ॥ १० ॥ भावं जैमिनिर्विकल्पामननात्
॥ ११ ॥ द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ तन्वभावे सन्ध्य-
वदुपपद्यते ॥ १३ ॥ भावे जाग्रद्वत् ॥ १४ ॥ सूत्रम् ।

चतुर्थाध्यायस्य चतुर्थपादे
पञ्चमाधिकरणमारचयति ।

व्यवस्थितावैच्छिकौ वा भावाभावौ तनोर्यतः ।
विरुद्धौ तेन पुंभेदादुभौ स्यातां व्यवस्थितौ ॥
एकस्मिन्नपि पुंस्येतावैच्छिकौ कालभेदतः ।
अविरोधात् स्वप्नजाग्रद्भोगवद् युज्यते द्विधा ॥ ५ ॥

प्रदीपवदावेशस्तथाहि दर्शयति ॥ १५ ॥ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥ सूत्रम्।

चतुर्थाध्यायस्य चतुर्थपादे

षष्ठाधिकरणमारचयति।

निरात्मनोऽनेकदेहा सात्मका वा? निरात्मका।
अभेदादात्ममनसोरेकस्मिन्नेव वर्त्तनात्॥
एकात्मात्मनसोऽन्यानि मनांसि स्युः प्रदीपवत्।
आत्मभिस्तदवच्छिन्नैः सात्मकाः स्युरिमेऽन्यतः॥ ६॥

जगद्व्यापारवर्ज्जं प्रकरणादसन्निहितत्वाच्च ॥ १७ ॥ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ विकारावर्त्ति च तथाहि स्थितिमाह ॥ १९ ॥ दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ सूत्रम्।

इति चतुर्थाध्यायस्य चतुर्थपादे।

चतुर्थाध्यायस्य चतुर्थपादे

सप्तमाधिकरणमारचयति।

जगत्स्रष्टृत्वमस्त्येषां योगिनामथ नास्ति वा?
'आप्नोति स्वाराज्यमाप्नोती'त्युक्तैश्वर्यानवग्रहात्॥
स्रष्टावप्रकृतत्वेन स्रष्टृता नास्ति योगिनाम्।
स्वाराज्यमीशो भोगाय ददे मुक्तिश्च विद्यया॥ ७॥

इति चतुर्थाध्यायस्य चतुर्थपादे।

चतुर्थोऽध्यायः समाप्तः।

समाप्तश्चायं ग्रन्थः।

---

शुभम्।

# वेदान्तदर्शनम् ।

यमिह कारुणिकं शरणं गतोऽप्यरिसहोदर आप महत् पदम् ।
तमहमाशु हरिं परमाश्रये जनकजावरमनन्तसुखाकृतिम् ॥ १ ॥
श्रीगौर्य्यां सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदं
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डाभिधम् ।
वन्दे चर्मकपालिकोपकरणैर्वैराग्यसौख्यात् परं
नास्तीति प्रदिशन्तमन्नविधुरं श्रीकाशिकेशं शिवम् ॥ २ ॥
यत्कृपालवमात्रेण मूको भवति पण्डितः ।
वेदशास्त्रशरीरान्तां वाणीं वीणाकराम्भजे ॥ ३ ॥
कामाक्षीदत्तदुग्धप्रचुरघृतयुतप्राज्यभोज्याधिपूज्य-
श्रीगौरीनायकाभित्प्रकटशिवरामार्य्यलब्धात्मबोधैः ।
श्रीमद्गोपालगीर्भिः प्रकटितपरमाद्वैतभावाङ्किताऽस्य
श्रीमद्गोविन्दवाणीचरणकमलयोर्निर्वृतोऽहं यथालिः ॥ ४ ॥
श्रीशङ्करं भाष्यकृतं प्रणम्य व्यासं हरिं सूत्रकृतञ्च वच्मि ।
श्रीभाष्यतीर्थे परहंसतुष्ट्यै वाग्जालबन्धच्छिदमभ्युपायम् ॥ ५ ॥
विस्तृतग्रन्थवीक्षायामलसं यस्य मानसम् ।
आस्था तदर्थमारब्धा भाष्यरत्नप्रभाभिधा ॥ ६ ॥
श्रीमच्छारीरकं भाष्यं प्राप्य वाक् शुद्धिमाप्नुयात् ।
इति श्रमो मे सफलो गङ्गा रथ्योदकं यथा ॥ ७ ॥
यदज्ञानसमुद्भूतमिन्द्रजालमिदं जगत् ।
सत्यज्ञानसुखानन्तं तदहं ब्रह्म निर्भयम् ॥ ८ ॥

इह खलु "स्वाध्यायोऽध्येतव्यः" इति नित्याध्ययनविधिनाऽधीतसाङ्ग-स्वाध्याये "तद्विजिज्ञासस्व" "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इति श्रवणविधिरुपलभ्यते । तत्रार्थः [illegible]-

कामेन तु तात्पर्यविचार एव वेदान्तवाक्ये कर्त्तव्य इति। किं च कार्त्स्न्येन नियमविधिनाऽधीतवेदस्य शास्त्रप्रवृत्तिः वैदिकानां पुराणादिप्राधान्यं वा निरस्यत इति वस्तुगतिः। तत्र कश्चिदिह जन्मनि जन्मान्तरे वानुष्ठितयज्ञादिभिर्निर्मलस्वान्तोऽस्य श्रवणविधेः को विषयः? किं फलं? कोऽधिकारी? कः सम्बन्धः? इति जिज्ञासते। तं जिज्ञासुमुपलभमानो भगवान् बादरायणस्तदनुबन्धचतुष्टयं श्रवणात्मकशास्त्रारम्भप्रयोजकं न्यायेन निर्णेतुमिदं सूत्रं रचयाञ्चकार "अथातो ब्रह्मजिज्ञासा" इति।

नन्वनुबन्धजातं विधिसन्निहितार्थवादवाक्यैरेव ज्ञातुं शक्यम्। तद्यथा 'इह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्या "यत् कृतकं तदनित्यम्" इति न्यायवत्या "न जायते म्रियते वा विपश्चित्" "यो वै भूमा तदमृतमतोऽन्यदार्त्तम्" इत्यादिश्रुत्या च भूमात्मा नित्यस्ततोऽन्यदनित्यमिति विवेको लभ्यते। कर्मणा कृष्यादिना चितं सम्पादितं सस्यादिर्लोको भोग्य इत्यर्थः। विपश्चित् नित्यज्ञानस्वरूपः। "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यादिश्रुत्या अनात्ममात्रे वैराग्यं लभ्यते। परीक्ष्य अनित्यत्वेन निश्चित्य। अकृतो मोक्षः कृतेन कर्मणा नास्तीति। कर्मतत्फलेभ्यो वैराग्यं प्राप्नुयादित्यर्थः। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येत्" इति श्रुत्या शमादिषट्कं लभ्यते। "समाहितो भूत्वा" इति काण्वपाठः। उपरतिः संन्यासः। "न च पुनरावर्त्तते" इति स्वयंज्योतिरानन्दात्मकमोक्षस्य नित्यत्वश्रुत्या मुमुक्षा लभ्यते। तथा च विवेकादिविशेषणवानधिकारीति ज्ञातुं शक्यम्। यथा "एता रात्रीरुपयन्तीति" रात्रिसत्रविधौ प्रतितिष्ठन्तीत्यर्थवादस्थप्रतिष्ठाकामस्य इव। तथा "श्रोतव्य" इत्यत्र तव्यप्रत्ययार्थस्य नियोगस्य प्रकृत्यर्थो विचारो विषयः। विचारस्य वेदान्ता विषय इति शक्यं ज्ञातुम्। "आत्मा द्रष्टव्य" इत्यात्मदर्शनमुद्दिश्य "श्रोतव्य" इति विचारविधानात्। न हि विचारः साक्षाद्दर्शनहेतुः अप्रमाणत्वात् अपि तु प्रमाणविषयत्वेन।

प्रमाणं त्वज्ञातात्मनि वेदान्ता एव। "तं त्वौपनिषदं पुरुषम्" "वेदान्तविज्ञानसुनिश्चितार्थाः" इति श्रुतेः। वेदान्तानाञ्च प्रत्यग्ब्रह्मैक्यं विषयः "तत्त्वमसि" "अहं ब्रह्मास्मि" इति श्रुतेः। एवं विचारविधेः फलमपि ज्ञानद्वारा मुक्तिः "तरति शोकमात्मवित्" "ब्रह्मविद् ब्रह्मैव भवति" इत्यादिश्रुतेः। तथा सम्बन्धोऽप्यधिकारिणा विचारस्य कर्त्तव्यतारूपः फलस्य प्राप्यतारूप इति यथायोगं सुबोधः। तस्मादिदं सूत्रं व्यर्थमिति चेत्। न। तासामधिकार्य्यादिश्रुतीनां स्वार्थे तात्पर्यनिर्णायकन्यायसूत्राभावे किं विवेकादिविशिष्टोऽधिकारी उतान्यः? किं वेदान्ताः पूर्व्वतन्त्रेण गतार्था अगतार्था वा? किं ब्रह्म प्रत्यगभिन्नं न वा? किं मुक्तिः स्वर्गादिवत् लोकान्तरस्था आत्मस्वरूपा वेति संशयानिवृत्तेः। तस्मादागमवाक्यैरापाततः प्रतिपन्नाधिकार्य्यादिनिर्णयार्थमिदं सूत्रमावश्यकम्। तदुक्तं प्रकाशात्मश्रीचरणैः। 'अधिकार्य्यादीनामागमिकत्वेऽपि न्यायेन निर्णयार्थमिदं सूत्रम्' इति। येषां मते श्रवणे विधिर्नास्ति तेषामविहितश्रवणेऽधिकार्य्यादिनिर्णयानपेक्षणात् सूत्रं व्यर्थमित्यापतति इत्यलं प्रसङ्गेन।

तथा चास्य सूत्रस्य शास्त्रविषयापेक्षिताधिकार्य्यादिश्रुतिभिः स्वार्थनिर्णयायोत्थापितत्वात् हेतुहेतुमद्भावः श्रुतिसङ्गतिः। शास्त्रारम्भहेतुत्वनिर्णायकत्वेनोपोद्घातत्वाच्छास्त्रादौ सङ्गतिः। अधिकार्य्यादिश्रुतीनां स्वार्थे समन्वयोक्तेः समन्वयाध्यायसङ्गतिः। "ऐतदात्म्यमिदं सर्वं" "तत् सत्यं" "स आत्मा" "तत्त्वमसि" इत्यादिश्रुतीनां सर्व्वात्मत्वादिस्पष्टब्रह्मलिङ्गानां विषयादौ समन्वयोक्तेः पादसङ्गतिः। एवं सर्व्वसूत्राणां श्रुत्यर्थनिर्णायकत्वात् श्रुतिसङ्गतिः। तत्तदध्याये तत्तत्पादे च समानप्रमेयत्वेन सङ्गतिरूहनीया। प्रमेयन्तु कृत्स्नशास्त्रस्य ब्रह्म, अध्यायानां तु समन्वयाविरोधसाधनफलानि। तत्र प्रथमपादस्य स्पष्टब्रह्मलिङ्गानां समन्वयः प्रमेयः। द्वितीयतृतीययोरस्पष्टब्रह्मलिङ्गानाम्। चतुर्थपादस्य पदमात्रसमन्वय इति भेदः। अस्याधिकरणस्य प्राथम्यान्नाधिकरणसङ्गतिरपेक्षिता।

अथाधिकरणमारच्यते। "श्रोतव्यः" इति विहितश्रवणात्मकं वेदान्तमीमांसाशास्त्रं विषयः। तत् किमारब्धव्यं न वेति विषयप्रयोजनसम्-

वसम्भवेऽस्या संशय । तत्र “नाहं ब्रह्म” इति भेदप्रत्यक्षेण कर्तृत्वाकर्तृत्वादिविरुद्धधर्मवत्त्वलिङ्गकानुमानेन च विरोधेन ब्रह्मात्मनो ऐक्यस्य विषयस्यासम्भवात्, सत्यबन्धस्य ज्ञानान्निवृत्तिरूपफलासम्भवाच्चानारम्भणीयमिति प्राप्ते सिद्धान्तः “अथातो ब्रह्मजिज्ञासा” इति । अत्र प्रवृत्तिविधिसमानार्थत्वाय “कर्तव्या” इति पदमध्याहर्तव्यम् । अध्याहृतञ्च भाष्यकृता “ब्रह्मजिज्ञासा कर्तव्या” इति । तत्र प्रकृतिप्रत्ययार्थयोर्ज्ञानेच्छयोः कर्तव्यत्वानन्वयात् प्रकृत्या फलीभूतं ज्ञानमजहल्लक्षणयोच्यते प्रत्ययेनेच्छासाध्यो विचारो जहल्लक्षणया । तथा च “ब्रह्मज्ञानाय विचारः कर्तव्य” इति सूत्रस्य श्रौतार्थः सम्पद्यते । तत्र ज्ञानस्य स्वतः फलत्वायोगात् प्रमातृत्वकर्तृत्वभोक्तृत्वात्मकानर्थनिवर्तकत्वेनैव फलत्वं वक्तव्यम् । तत्रानर्थस्य सत्यत्वे ज्ञानमात्रान्निवृत्त्ययोगादध्यस्तत्वं वक्तव्यमिति बन्धस्याध्यस्तत्वमर्थात् सूचितम् । तच्च शास्त्रस्य विषयप्रयोजनवत्त्वसिद्धिहेतुः । तथा हि शास्त्रमारम्भणीयं विषयप्रयोजनवत्त्वात् भोजनादिवत् शास्त्रं प्रयोजनवत् बन्धनिवर्तकज्ञानहेतुत्वात् “रज्जुरियं” इत्यादिवाक्यवत् । बन्धो ज्ञाननिवर्त्योऽध्यस्तत्वात् रज्जुसर्पवत्, इति प्रयोजनसिद्धिः । एवमर्थात् ब्रह्मज्ञानाज्जीवगतानर्थनिवृत्तिं फलं सूत्रयन् जीवब्रह्मणोरैक्यं विषयमर्थात् सूचयति । यज्ज्ञानाद्यन्नश्यति तदभिन्नं । जीवो ब्रह्माभिन्नः तज्ज्ञाननिवर्त्याध्यासाश्रयत्वात्, यदित्थं तत्तथा यथा शुक्त्यभिन्न इदमंश इति विषयसिद्धिहेतुरध्यासः' इत्येवं विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति । अत्र पूर्वपक्षे बन्धस्य सत्यत्वेन ज्ञानान्निवृत्तेरुपायान्तरसाध्या मुक्तिरिति फलम् । सिद्धान्ते ज्ञानादेव मुक्तिरिति विवेकः । इति सर्वं मनसि निधाय ब्रह्मसूत्राणि व्याचिख्यासुर्भगवान् भाष्यकारः सूत्रेण विचारकर्तव्यतायाः प्रतीतायाऽन्यथानुपपत्त्याऽर्थात् सूचितं विषयप्रयोजनवत्त्वोपयोगित्वात् तत्सिद्धिहेतुमध्यासमाक्षेपसमाधानभाष्याभ्यां प्रथमं वर्णयति “युष्मदस्मत्प्रत्ययगोचरयोः” इति । एतेन सूत्रार्थास्पर्शित्वादध्यासग्रन्थो न भाष्यमिति निरस्तम् । आर्थिकार्थस्पर्शित्वात् ।

ओं नमो भगवते वासुदेवाय ।

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद्वि-

---

यत्तु मङ्गलाचरणाभावादव्याख्येयमिदं भाष्यमिति । तन्न । सुतरामित-रेतरभावानुपपत्तिरित्यन्तभाष्यरचनार्थं तदर्थस्य सम्यगुपहृदीकृतस्य विद्या-नन्दप्रत्यगर्थस्य स्मृतत्वात् । अतो निर्दोषत्वादिदं भाष्यं व्याख्येयम् ॥

लोके शुक्ताविदं रजतमिति भ्रमः सम्यग्रजते इदं रजतमित्यधिष्ठान-सामान्यारोप्यविशेषयोरैक्यप्रमाहितसंस्कारजन्यो दृष्ट इति । अत्रात्मा-न्यात्माहङ्काराध्यासे पूर्वप्रमा वाच्या, सा चात्मानात्मनोर्वास्तवैक्यमपेक्षते न हि तदस्ति । तथा हि आत्मानात्मानावैक्यशून्यौ परस्परैक्यायोग्यत्वात् तमःप्रकाशवदिति मत्वा हेतुभूतं विरोधं वस्तुतः प्रतीतितो व्यवहारतश्च दर्शयति ॥ युष्मदस्मत्प्रत्ययगोचरयोरिति ॥ न च "प्रत्ययोत्तरपदयोश्च" इति [पा० ७।२।९८] सूत्रेण "प्रत्यये चोत्तरपदे च परतो युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ स्तः" इति विधानात् त्वदीयं मदीयं त्वत्पुत्रो मत्पुत्र इतिवत् "त्वन्मत्प्रत्ययगोचरयोः" इति स्यादिति वाच्यम् । "त्वमावेकवचने" [पा० ७।२।९७] इत्येकवचनाधिकारात् । अत्र च युष्मदस्मदोरेकार्थवाचित्वाभा-वादनात्मनां युष्मदर्थानां बहुत्वादस्मदर्थचेतनस्याप्युपाधितो बहुत्वात् ।

नन्वेवं कथमत्र भाष्ये विग्रहः ? न च "यूयमिति प्रत्ययो युष्मत्प्रत्ययः वयमिति प्रत्ययोऽस्मत्प्रत्ययस्तद्गोचरयोरिति विग्रहः" इति वाच्यम् । शब्द-साधुत्वेऽप्यर्थासाधुत्वात् । न ह्यहङ्कारादयोऽनात्मानो यूयमिति प्रत्ययविषयत्व-मर्हन्तीति चेत् न, गोचरपदस्य योग्यतापरत्वात् । चिदात्मा तावदस्मत्प्रत्य-ययोग्यः । तत्प्रयुक्तवचनादिनिर्देशफलभाक्त्वात्, न तावदयमेकान्तेनाविषय अस्मत्प्रत्ययविषयत्वादिति भाष्योक्तेश्च । अयमहङ्कारादिरपि तद्योग्यस्तथापि चिदात्मनः सकाशादत्यन्तभेदसिद्ध्यर्थं युष्मत्प्रत्यययोग्य इत्युच्यते ।

वाचस्पतिमिश्रास्तु टीकायोजनायामेवमाहुः । "सर्वोऽप्यचेतनो युष्म-त्पदवाच्यः, अहङ्कारादिविशिष्टचेतनोऽस्मत्पदवाच्यः, तथा च युष्मदस्मदोः स्वार्थे प्रयुज्यमानयोरेव त्वमादेशनियमो न लाक्षणिकयोः । "युष्मदस्मदोः षष्ठी चतुर्थीद्वितीयास्थयोर्वान्नावौ" इति [पा० ८।१।२०] सूत्रे लाक्षणिकप्रयुक्तयो-

तद्विपर्ययेण विषयिणस्तद्धर्माणाञ्च विषयेऽध्यासो मिथ्येति भवितुं युक्तम्। तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मि-

---

निरवयवनिर्गुण स्वप्रकाशात्मनि गुणावयवसादृश्यस्य चायोगात्।

नन्वात्मनो निर्गुणत्वे तद्धर्माणामिति भाष्यं कथमिति चेत्। उच्यते, बुद्धिवृत्त्यभिव्यक्तं चैतन्यं ज्ञानं, विषयाभेदेनाभिव्यक्तं स्फुरणम्। शुभकर्मजन्यवृत्तिव्यक्तमानन्द, इत्येवं वृत्त्युपाधिकृतभेदात् ज्ञानादीनामात्मधर्मत्वव्यपदेश। तदुक्तं टीकायां "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्त" इति। अतो निर्गुणब्रह्मात्मत्वमते "अहं करोमि" इति प्रतीतेर्धर्मस्य चाध्यासत्वायोगात् प्रमात्वम् "अहं नर इति सामानाधिकरण्यस्य गौणत्वमिति" मतमास्थेयम्। तथा च बन्धस्य सत्यतया ज्ञानान्निवृत्तिरूपफलासम्भवाद् बद्धमुक्तयोर्जीवब्रह्मणोरैक्यायोगेन विषयासम्भवात् शास्त्रं नारम्भणीयमिति पूर्वपक्षभाष्यतात्पर्यम्। युक्तग्रहणात् पूर्वपक्षस्य दुर्बलत्वं सूचयति। तथा हि किमध्यासस्य नास्तित्वमयुक्तत्वादभानाद्वा कारणाभावाद्वा? आद्य इष्ट इत्याह। तथापीति॥ एतदनुरोधादादौ यद्यपीति पठितव्यम्। अध्यासस्याहङ्कारस्वप्रकाशात्मन्ययुक्तत्वेनालङ्कार इति भावः। न द्वितीय इत्याह। अयमिति॥ "अहं कर्ता मनुष्योऽहं" इति प्रत्यक्षानुभवादध्यासस्याभानमसिद्धमित्यर्थः। न चेदं प्रत्यक्षं कर्तृत्वादौ प्रमेति वाच्यम्। अपौरुषेयतया निर्दोषेणोपक्रमादिलिङ्गावधृततात्पर्येण च "तत्त्वमस्यादि" वाक्येनाकर्तृब्रह्मबोधनेनास्य भ्रमत्वनिश्चयात्। न च ज्येष्ठप्रत्यक्षविरोधादागमस्यैव बाध इति वाच्यं देहात्मवादप्रसङ्गात्। "मनुष्योऽहं" इति प्रत्यक्षविरोधेन "अथायमशरीर" इत्यादिश्रुत्या देहान्यात्मासिद्धेः। "तस्मादिदं रजतं" इति वत् सामानाधिकरण्यप्रत्यक्षस्य भ्रमत्वग्राहकविहीनस्य आगमात् प्राबल्यमित्यास्थेयम्। किञ्च ज्येष्ठत्वं पूर्वभावित्वं वा? आगमज्ञाने प्रत्यक्षोपजीवित्वं वा? आद्ये न प्राबल्यम्। ज्येष्ठस्यापि रजतभ्रमस्य पश्चाद्भाविना शुक्तिज्ञानेन बाधदर्श-

कालभेदेन कल्पितभेदेऽपि अत्यन्तभेदाभावात् , इति वक्तुमत्यन्तेत्युक्तम् । न च धर्मितादात्म्याध्यासे धर्माध्यासंसिद्धेः "धर्मेति" व्यर्थमिति वाच्यम् । अन्धत्वादीनामिन्द्रियधर्माणां धर्म्यध्यासाक्ष्फुटत्वेऽप्यन्धोऽहमिति स्फुटोऽध्यास इति ज्ञापनार्थत्वात् । नन्वात्मानात्मनो परस्पराध्यस्तत्वे शून्यवाद इत्यादित्याशङ्क्याह ॥ सत्यानृते मिथुनीकृत्येति,सत्यमिदं चैतन्यं तत्रात्मनि न सर्गमात्राध्यासो न स्वरूपस्य अनृत युष्मदर्थः तस्य स्वरूपतोऽप्यध्यासात् तयोर्मिथुनीकरणमध्यास इति न शून्यतेत्यर्थः ।

नन्वध्यासमिथुनीकरणलोकव्यवहारशब्दानामेकार्थत्वे ऽध्यस्य मिथुनीकृत्येति पूर्वकालत्ववाचि "त्वा" प्रत्ययादेशस्य ल्यप. कथं प्रयोग इति चेन्न अध्यासव्यक्तिभेदात् । तत्र पूर्वपूर्वाध्यासस्योत्तरोत्तराध्यासं प्रति संस्कारद्वारा पूर्वकालत्वेन हेतुत्वद्योतनार्थं ल्यप प्रयोग । तदेव स्पष्टयति । नैसर्गिक इति ॥ प्रत्यगात्मनि हेतुहेतुमद्भावेनाध्यासप्रवाहोऽनादिरित्यर्थः । ननु प्रवाहस्यावस्तुत्वादध्यासव्यक्तीनां सादित्वात् कथमनादित्वमिति चेत् ? उच्यते । अध्यासत्वावच्छिन्नव्यक्तीनां मध्येऽन्यतमया व्यक्त्या विनाऽनादिकालस्यावर्त्तनं कार्यानादित्वमिति, अङ्गीकारात् । एतेन कारणाभावादिति कल्पो निरस्तः संस्कारस्य निमित्तस्य नैसर्गिकोपदेनोक्तत्वात् । न च पूर्वप्रमाजन्य एव संस्कारो हेतुरिति वाच्यं लाघवेन पूर्वानुभवजन्यसंस्कारस्य हेतुत्वात् । अतः पूर्वाध्यासजन्यसंस्कारोऽस्तीति सिद्धम् । अध्यासस्योपादानमाह । मिथ्याज्ञाननिमित्त इति । मिथ्या च तदज्ञानञ्च मिथ्याज्ञानं तन्निमित्तमुपादानं यस्य स तन्निमित्तस्तदुपादान इत्यर्थः । अज्ञानस्योपादानत्वेऽपि सम्यग्दर्शनात् तत्स्थावृतकतया दोषत्वेनाहङ्काराध्यासकर्त्तुरीश्वरस्योपाधित्वेन संस्कारकालकर्मादिनिमित्तपरिणामित्वेन च निमित्तमिति द्योतयितुं निमित्तपदम् । स्वप्रकाशात्मन्यसङ्गे कथमविद्यासङ्ग संस्कारादिनामप्यभावात्, इति शङ्कानिरासार्थं मिथ्यापदम् । प्रचण्डमार्त्तण्डमण्डले पेचकानुभवसिद्धान्धकारवत् "अहमज्ञ" इत्यनुभवसिद्धमज्ञानं दुरपह्नवं कल्पितस्याधिष्ठानासंस्पर्शित्वात् मित्रस्वरूपज्ञानस्याविरोधित्वाच्चेति । यद्वा अज्ञानं प्रा-

नैसर्गिकोऽयं लोकव्यवहारः । आह कोऽयमध्यासो नामेति ?

---

नाभाव इति शङ्कानिरासार्थं मिथ्यापदम् । मिथ्यात्वे सति साक्षाज्ज्ञाननिवर्त्यत्वमज्ञानस्य लक्षणं मिथ्याज्ञानपदेनोक्तम् । ध्वंसेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति मिथ्यात्वे सतीत्युक्तम् । अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्ये बन्धेऽतिव्याप्तिनिरासाय साक्षादिति । अनाद्युपादानत्वे सति मिथ्यात्वं वा लक्षणम् । ब्रह्मनिरासार्थं मिथ्यात्वमिति । घटादिनिरासार्थमनादीति । अविद्यात्मनोः सम्बन्धनिरासार्थमुपादानत्वे सतीति । सम्प्रति अध्यासं दर्शयितुमभिलपति ॥ अहमिदं ममेदमिति । आध्यात्मिककार्याध्यासद्वयमिति प्रथमोऽध्यासः । न चाधिष्ठानारोप्ययोर्द्वयोरनुपलम्भात् नायमध्यास इति वाच्यम् । "अयो दहति" इतिवत् "अहमुपलभे" इति इदमहमंशयोरुपलम्भात् । इदं पदेन भोग्यसङ्घात उच्यते । "अत्राहमिदं" इत्यनेन "मनुष्योऽहं" इति तादात्म्याध्यासो दर्शितः । "ममेदं शरीरं" इति संसर्गाध्यासः ।

ननु देहात्मनोस्तादात्म्यमेव संसर्ग इति चेत् । सत्यम् । सत्त्वैक्ये सति मिथोऽभेदस्तादात्म्यम् । तत्र "मनुष्योऽहम्" इत्यैक्यांशभानं "ममेदमिति" भेदांशस्य संसर्गभानमिति भेदः । एवं चानयोरध्यासयोरनुभवसिद्धत्वादध्यासोऽस्तीत्यतो ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनयोः सत्त्वात् शास्त्रमारम्भणीयमिति सिद्धान्तभाष्यतात्पर्यम् । एवञ्च सूत्रेणार्थात् सूचिते विषयप्रयोजने प्रतिपाद्य तद्धेतुमध्यासं लक्षणसम्भावनाप्रमाणैः साधयितुं लक्षणं पृच्छति । आहेति । किं लक्षणकोऽध्यास इत्याह पूर्ववादीत्यर्थः । अस्य शास्त्रस्य तत्त्वनिर्णयप्रधानत्वेन वादकथात्वद्योतनार्थं आहेति परोक्तिः । "आहेत्यादि" "कथं पुनः प्रत्यगात्मनीत्यन्तम्" प्रागध्यासलक्षणपरं भाष्यं तदारभ्य सम्भावनापरम् । "तमेतमविद्याख्यम्" इत्यारभ्य "सर्वलोकप्रत्यक्षः" इत्यन्तं प्रमाणपरमिति विभागः । लक्षणमाह । उच्यते स्मृतिरूप इति । अध्यास इत्यनुषङ्गः । अत्र परत्रावभास इत्येव लक्षणम् । शिष्टं पदद्वयं तदुपपादनार्थम् । तथाहि अवभास्यत इत्यवभासो रजताद्यर्थः तस्यायोग्यमधिकरणं परत्रपदार्थः ।

उच्यते स्मृतिरूपः परत्र पूर्वदृष्टावभासः। तं केचित् 'अन्य-

---

अधिकरणस्यायोग्यत्वमारोप्यात्यन्ताभावत्वं तद्वत्त्वं वा? तथा चैकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववति अवभास्यत्वमध्यस्तत्वमित्यर्थः। इदञ्च माध्यमिकानाद्यध्याससाधारणं लक्षणम्। संयोगेऽतिव्याप्तिनिरासाय एकावच्छेदेनेति। संयोगस्य स्वसंसृज्यमाने वृक्षे स्वात्यन्ताभाववत्यवभास्यत्वेऽपि स्वस्वात्यन्ताभावयोर्मूलाग्रावच्छेदकभेदान्नातिव्याप्तिः। पूर्वं स्वाभाववति भूतले पश्चादानीतो घटो भातीति घटेऽतिव्याप्तिनिरासाय स्वसंसृज्यमान इति पदम्। तेनावभासकाले प्रतियोगिसंसर्गस्य विद्यमानत्वमुच्यते इति नातिव्याप्तिः। भूत्वावच्छेदेनावभास्यगन्धेऽतिव्याप्तिवारणाय स्वात्यन्ताभाववतीति पदम्। शुक्त्यवच्छेदेन रजतसंसर्गकालेऽत्यन्ताभावोऽस्तीति नाव्याप्तिः। नन्वस्य लक्षणस्यासम्भवः शुक्तौ रजतस्य सामग्र्यभावेन संसर्गासम्भवात्। न च स्मर्यमाणसत्यरजतस्यैव एकत्र शुक्त्याववभास्यत्वेनाध्यस्तत्वोक्तिरिति वाच्यम् अन्यथाख्यातिप्रसङ्गादित्यत आह॥ स्मृतिरूप इति॥ स्मर्यत इति स्मृतिः स्मर्यमाणं तस्य रूपमिव रूपमस्येति स्मृतिरूपः स्मर्यमाणसदृश इत्यर्थः। सादृश्योक्त्या स्मर्यमाणादारोप्यस्य भेदान्नान्यथाख्यातिरित्युक्तं भवति। सादृश्यमुपपादयति॥ पूर्वदृष्टेति॥ दृष्टं दर्शनं संस्कारद्वारा पूर्वदर्शनादवभास्यत इति पूर्वदृष्टावभासः। तेन संस्कारजन्यज्ञानविषयत्वं स्मर्यमाणारोप्ययोः सादृश्यमुक्तं भवति स्मृत्यारोपयोः संस्कारजन्यत्वात्। न च संस्कारजन्यत्वादारोपस्य स्मृतित्वापत्तिरिति वाच्यम् दोषसंप्रयोगजन्यत्वस्यापि विवक्षितत्वेन संस्कारमात्रजन्यत्वाभावात्। अत्र संप्रयोगशब्देन अधिष्ठानसामान्यज्ञानमुच्यते। अहङ्काराध्यासे इन्द्रियसंप्रयोगालाभात्। एवञ्च दोषसंप्रयोगसंस्कारबलाच्छुक्त्यादौ रजतमुत्पन्नमस्तीति परत्र परावभास्यत्वं लक्षणमुपपन्नमिति स्मृतिरूपपूर्वदृष्टपदाभ्यामुपपादितम्। अन्ये तु 'ताभ्यां दोषादित्रयजन्यत्वं कार्याध्यासलक्षणमुक्तम्' इत्याहुः। अपरे तु "स्मृतिरूपः स्मर्यमाणसदृशः" सादृश्यञ्च प्रमाणाजन्यज्ञानविषयत्वं, स्मृत्यारोपयोः प्रमाणाजन्यत्वात् पूर्वदृष्टपदं तज्जातीयपरं, अभिनवरजतादेः पूर्वदृष्टत्वाभावात्, तथा च प्रमाणाजन्य-

त्वान्यधर्माध्यास" इति वदन्ति । केचित्तु 'यत्र यदध्यासस्त द्विवेकाग्रहनिबन्धनो भ्रम" इति । अन्ये तु "यत्र यदध्या सस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत" इति । सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति । तथाच लोकेऽनु-

---

ज्ञानविषयत्वं इति पूर्वदृष्टजातीयत्वं प्रातीतिकाध्यासलक्षणं ताभ्या- मुक्तं, परत्रावभासपदाभ्यामध्यासमात्रलक्षणं व्याख्यातमेव, तत्र स्मर्य- माणगङ्गादावभिनवघटे चातिव्याप्तिनिरासाय प्रमाणेत्यादिपदद्वयम्" इ- त्याहुः । तत्रार्थाध्यासे स्मर्यमाणसदृशः परत्र पूर्वदर्शनादवभासत इति योजना । ज्ञानाध्यासे तु स्मृतिसदृशः परत्र पूर्वदर्शनादवभासत इति वाक्यं योजनीयम् इति संक्षेपः । ननु अध्यासे वादिविप्रतिपत्तेः कथ- मुक्तलक्षणसिद्धिरित्याशङ्क्याधिष्ठानारोप्यस्वरूपविवादेऽपि "परत्र पराव- भास" इति लक्षणे सर्वादीनामविगानात् तल्लक्षणसिद्धिरिति मत्वा अन्यथाख्यातिवादिनोऽनुमतमाह ॥ तं केचिदिति ॥ केचिदन्यथाख्यातिवादिनोऽन्यत्र शुक्त्यादावन्यधर्मस्य स्वा- वयवधर्मस्य देशान्तरस्थरूप्यादेरध्यास इति वदन्ति । आत्मख्यातिवादिनस्तु बाह्यशुक्त्यादौ बुद्धिरूपात्मनो धर्मस्य रजतस्याध्यास आन्तरस्य रजतस्य बहिर्वदवभास इति वदन्तीत्यर्थः ॥ अख्यातिमतमाह ॥ केचिदिति ॥ यत्र यस्याध्यासो लोकसिद्धस्तयोर्धर्मिणोर्ज्ञानयोश्च भेदाग्रहे सति तन्मूलो भ्रमः, इदं रूप्यमिति विशिष्टव्यवहार इति वदन्तीत्यर्थः । तैरपि विशिष्टव्यव- हारान्यथानुपपत्त्या विशिष्टभ्रान्तेः स्वीकार्यत्वात् परत्र परावभासत्व- स्वीकृतिरिति भावः । शून्यमतमाह ॥ अन्ये त्विति ॥ तस्यैवाधिष्ठानस्य शु- क्त्यादेर्विपरीतधर्मत्वकल्पनां विपरीतो विरुद्धो धर्मो यस्य तद्भावस्तस्य रज- तादेरत्यन्तासत कल्पनामाचक्षत इत्यर्थः । एतेषु मतेषु परत्र परावभा- सत्वलक्षणसंवादमाह ॥ सर्वथापि त्विति ॥ अन्यथाख्यातिवादिप्रकार- विवादेऽप्यध्यासः परत्र परावभासत्वलक्षणं न जहातीत्यर्थः । शुक्त्यव- च्छिन्नस्य रजतस्य देशान्तरे बुद्धौ वा सत्त्वायोगात् शून्यत्वं प्रत्यक्षत्वा-

भवः "शुक्तिका हि रजतवदवभासते एकश्चन्द्रः सद्वितीयवद्" इति। कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयधर्माणां? सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति। युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। उच्यते। न

---

योगात् शुक्तौ सत्त्वे बाधायोगान्मिथ्यात्वमेवेति भावः। आरोप्यमिथ्यात्वे युक्त्यपेक्षा तस्यानुभवसिद्धत्वादित्याह॥ तथा चेति॥ बाधानन्तरकालीनोऽयमनुभवः। तत्पूर्वं शुक्तिकालसम्बन्धायोगात् रजतस्य बाधप्रत्यक्षसिद्धं मिथ्यात्वं च वक्तव्येनोच्यते। आत्मनि निरुपाधिकेऽहङ्काराध्यासे दृष्टान्तमुक्त्वा ब्रह्मजीवान्तरभेदस्याविद्याद्युपाधिकस्याध्यासे दृष्टान्तमाह॥ एक इति॥ द्वितीयचन्द्रसहितवदेक एवाङ्गुल्या द्विधा भातीत्यर्थः। अध्यासप्रकरणोपसंहारार्थं इतिशब्दः। भवत्वध्यासः शुक्त्यादौ, आत्मनि तु न सम्भवतीत्याक्षिपति॥ कथं पुनरिति॥ यत्रापरोक्षाध्यासाधिष्ठानत्वं तत्रेन्द्रियसंयुक्तत्वं विषयत्वञ्चेति व्याप्तिः शुक्त्यादौ दृष्टा। तत्र व्यापकाभावादात्मनोऽधिष्ठानत्वं न सम्भवतीत्यभिप्रेत्याह॥ प्रत्यगात्मनीति॥ प्रतीचि, पूर्णे इन्द्रियाग्राह्ये विषयस्याहङ्कारादेस्तद्धर्माणाञ्चाध्यासः कथमित्यर्थः। उक्तव्याप्तिमाह॥ सर्वो हीति। पुरोऽवस्थितत्वमिन्द्रियसंयुक्तत्वम्। तथात्मनोऽप्यधिष्ठानत्वार्थं विषयत्वादिकमस्त्वित्यत आह॥ युष्मदिति॥ इदं प्रत्ययानर्हस्य प्रत्यगात्मनो "न चक्षुषा गृह्यते" इत्यादिश्रुतिमनुसृत्य त्वमविषयत्वं ब्रवीषि। तस्मादध्यासलोभेन विषयत्वाङ्गीकारे श्रुतिसिद्धान्तयोर्बाधः स्यादित्यर्थः। आत्मन्यध्यासासम्भावना प्रतिजानीते॥ उच्यते इति॥ अधिष्ठानारोप्ययोरेकस्मिन् ज्ञाने भासमानत्वमात्रमध्यासव्यापकं; न तु भानप्रयुक्तसंयोगित्वादिफलभाक्त्वं भानभिन्नत्वघटितं विषयत्वं, तत्र व्यापकं गौरवादिति मत्वाह॥ न तावदिति॥ अयमात्मा नियमेनाविषयो न भवति तत्र हेतुमाह॥ अस्मदिति॥ अस्मत्प्रत्ययोऽहमित्यध्यासस्तत्र भासमानत्वादित्यर्थः। अनवच्छिन्नचिदात्मा प्रतिबिम्बितत्वेन यत्र प्रतीयते सोऽस्मत्प्रत्ययोऽह-

तावदयमेकान्तेनाविषयः। अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः। न चायमस्ति नियमः "पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति"। अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति। एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः। तमेतमेवं लक्षणमध्यासं प-

ङ्कारस्तत्र भासमानत्वादिति वार्थः। न चाध्यासे सति भासमानत्वं, तस्मिन् सति स इति परस्पराश्रय इति वाच्यम्, अनादित्वात्। पूर्वाध्यासे भासमानात्मन उत्तराध्यासाधिष्ठानत्वसम्भवात्।

नन्वहमित्यहङ्कारविषयकभानरूपस्यात्मनो भासमानत्वं कथं तद्विषयत्वं विना तत्फलभाक्त्वायोगादित्यत आह॥ अपरोक्षत्वाच्चेति॥ चशब्दः शङ्कानिरासार्थः॥ स्वप्रकाशकत्वादित्यर्थः। स्वप्रकाशत्वं साधयति। प्रत्यगिति॥ आबालपण्डितमात्मनः संशयादिशून्यत्वेन प्रसिद्धेः स्वप्रकाशत्वमित्यर्थः। अतः स्वप्रकाशत्वेन भासमानत्वादात्मनोऽध्यासाधिष्ठानत्वं सम्भवतीति भावः। यदुक्तमपरोक्षाध्यासाधिष्ठानत्वस्येन्द्रियसंयुक्ततया ग्राह्यत्वं व्यापकमिति तत्राह॥ न चायमिति॥ तत्र हेतुमाह॥ अप्रत्यक्षेऽपीति॥ इन्द्रियाग्राह्येऽपीत्यर्थः। बाला अविवेकिनः। तलमिन्द्रनीलकटाहकल्पं नभो मलिनं पीतमित्येवमपरोक्षमध्यस्यन्ति। तत्रेन्द्रियग्राह्यत्वं नास्तीति व्यभिचारान्न व्याप्तिः। एतेनात्मानात्मनोः सादृश्याभावान्नाध्यास इत्यपास्तम्। नीलनभसोस्तदभावेऽप्यध्यासदर्शनात्। सिद्धान्ते आलोकाकारचाक्षुषवृत्तिव्यञ्जकसाक्षिवेद्यत्वं नभस इति ज्ञेयम्। सम्भावनां निगमयति॥ एवमिति॥ ननु ब्रह्मज्ञाननाश्यत्वेन सूत्रितामविद्यां हित्वा अध्यासः किमिति वर्ण्यत इत्यत आह॥ तमेतमिति॥ आर्थिम समाहितमुक्तलक्षणलक्षितमध्यासमविद्याकार्यत्वादविद्येति मन्यन्त इत्यर्थः। विद्यानिवर्त्यत्वाच्चास्याविद्यात्वमित्याह॥ तद्विवेकेनेति॥ अध्यस्तनिषेधेनाधिष्ठानस्वरूपनिर्धारणं विद्यामध्यासनिवर्तिकामाहुरित्यर्थः। तथापि कारणाविद्यां त्यक्त्वा कार्याविद्या किमिति वर्ण्यते तत्राह॥ तत्रेति॥ तस्मिन्नध्यासे उक्तन्यायेनाविद्यात्मके

ण्डिता "अविद्या" इति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपा-
वधारणं "विद्याम्" आहुः। तत्रैवं सति यत्र यदध्यासस्तत्-
कृतेन दोषेण गुणेन वाऽणुमात्रेणापि स न सम्बध्यते।
तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य
सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः। स-
र्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि। कथं पुनर-
विद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति?
उच्यते। देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वा-
नुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः। न हीन्द्रियाण्यनुपादाय

---

सत्योऽर्थः। मूलाविद्यायाः सुषुप्तावनर्थत्वादर्शनात् कार्यात्मना तस्या
अनर्थत्वज्ञापनार्थं तद्दर्शनमिति भावः। अध्यस्तकृतगुणदोषाभ्यामधिष्ठानं
न लिप्यत इत्यक्षरार्थः। एवमध्यासस्य लक्षणसम्भावने उक्त्वा प्रमाणमाह।
तमेतमिति॥ तं वर्णितमेतं साक्षिप्रत्यक्षसिद्धं पुरस्कृत्य हेतुं कृत्वा लौकिकं कर्म-
शास्त्रीयो मोक्षशास्त्रीयश्चेति त्रिविधो व्यवहारः प्रवर्तत इत्यर्थः। तत्र विधि-
निषेधपराणि कर्मशास्त्राण्यृग्वेदादीनि, विधिनिषेधशून्यप्रत्यग्ब्रह्मपराणि
मोक्षपराणि वेदान्तवाक्यानीति विभागः। एवं व्यवहारहेतुत्वेनाध्यासे प्रत्य-
क्षसिद्धेऽपि प्रमाणान्तरं पृच्छति॥ कथं पुनरिति॥ अविद्यावानहमित्य-
ध्यासवानात्मा प्रमाता सोऽविषय आश्रयो येषां तानि अविद्यावद्विषयाणीति वि-
ग्रहः। तत्तत्प्रमेयव्यवहारहेतुभूतायाः प्रमायाः अध्यासात्मकप्रमात्राश्रित-
त्वात् प्रमाणानामविद्यावद्विषयत्वं यद्यपि प्रत्यक्षं तथापि पुनरपि कथं
केन प्रमाणेनाविद्यावद्विषयत्वमिति योजना। यद्वाऽविद्यावद्विषयाणि कथं
प्रमाणानि स्युः? आश्रयदोषादप्रामाण्यापत्तेरित्याक्षेपः। तत्र प्रमाणप्रश्ने
व्यवहारार्थापत्तिं तल्लिङ्गकानुमानञ्चाह॥ "उच्यते" इत्यादिना "तस्मात्"
इत्यन्तेन॥ देवदत्तकर्तृको व्यवहारस्तदीयदेहादिष्वहंममाध्यासमूलः तदन्वय-
व्यतिरेकानुसारित्वात्, यदित्थं तत्तथा। यथा मृन्मूलो घट इति प्रयोगः।
तत्र व्यतिरेकं दर्शयति॥ देहेति॥ देवदत्तस्य सुषुप्तावध्यासाभावे व्यवहाराभावो
दृष्टः, जाग्रत्स्वप्नयोरध्यासे सति व्यवहार इत्यन्वयः स्फुटत्वान्नोक्तः। अनेन

प्रत्यक्षादिव्यवहारः सम्भवति। न चाधिष्ठानमन्तरेणेन्द्रियाणां व्यापारः सम्भवति। न चानध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियते। न चैतस्मिन् सर्वस्मिन्नसत्यासङ्गस्यात्मनः प्रमातृत्वमुपपद्यते। न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शा-

---

लिङ्गेन कारणतयाध्यासः सिध्यति, व्यवहाररूपकार्यानुपपत्त्या वेति भावः। ननु मनुष्यत्वादिजातिमति देहेऽहमित्यभिमानमात्राद्व्यवहारः सिध्यतु किमिन्द्रियादिषु ममाभिमानेनेत्याशङ्क्याह ॥ न हीति ॥ इन्द्रियपदं लिङ्गादेरप्युपलक्षणं प्रत्यक्षादीत्यादिपदप्रयोगात्। तथा च प्रत्यक्षलिङ्गादिप्रयुक्तो यो व्यवहारो द्रष्टा अनुमाता श्रोताऽहमित्यादिरूपः स इन्द्रियादीनि ममतास्पदान्यगृहीत्वा न सम्भवतीत्यर्थः। यद्वा तानि ममत्वेनानुपादाय यो व्यवहारः स नेति योजना। पूर्वकालत्वानुपादानासम्भवक्रिययोरेको व्यवहारः कर्ता इति क्त्वाप्रत्ययः साधुः। उत्तरत्वानुपादानव्यवहारयोरेकात्मकर्तृकत्वात् तत्साधुत्वमिति भेदः। इन्द्रियादिषु ममेत्यध्यासाभावेऽन्धादेरिव द्रष्टृत्वादिव्यवहारो न स्यादिति भावः। इन्द्रियाध्यासेनैव व्यवहारादलं देहाध्यासेनेत्यत आह ॥ न चेति ॥ इन्द्रियाणामधिष्ठानमाश्रयः शरीरमित्यर्थः। नन्वस्त्वात्मना संयुक्तं शरीरं तेषामाश्रयः किमध्यासेनेत्यत आह ॥ न चानध्यस्तात्मभावेनेति ॥ अनध्यस्त आत्मभाव आत्मतादात्म्यं यस्मिन् तेनेत्यर्थः। "असङ्गो हि" इति श्रुतेराध्यासिक एव देहात्मनोः सम्बन्धो न संयोगादिरिति भावः। नन्वात्मनो देहादिभिराध्यासिकसम्बन्धोऽपि मास्तु। स्वतश्चैतन्यतया प्रमातृत्वोपपत्तेः, न च सुषुप्तौ प्रमातृत्वापत्तिः करणोपरमादित्यत आह ॥ न चैतस्मिन्निति ॥ प्रमाश्रयत्वं हि प्रमातृत्वम्। प्रमा यदि नित्यचिन्मात्रं तर्ह्याश्रयत्वायोगः कारणवैयर्थ्यं च। यदि वृत्तिमात्रं, जगदान्ध्यप्रसङ्गः वृत्तेर्जडत्वात्। अतो वृत्तीद्धो बोधः प्रमा, तदाश्रयत्वमसङ्गस्यात्मनो वृत्तिमदन्तःकरणतादात्म्याध्यासं विना न सम्भवतीति भावः। देहाध्यासे, तद्धर्माध्यासे चासतीत्य-

स्त्राणि चेति। पश्वादिभिश्चाविशेषात् यथा हि पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्त्तन्ते अनुकूले च प्रवर्त्तन्ते, यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति, एवं पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो नि

---

सूत्रार्थं, तर्ह्यात्मनः प्रमातृत्वं मास्तु इति वदन्तं प्रत्याह॥ न चेति॥ तस्मादात्मनः प्रमातृत्वादिव्यवहारार्थमध्यासोऽङ्गीकर्त्तव्य इत्यनुमानार्थापत्त्योः फलमुपसंहरति॥ तस्मादिति॥ प्रमाणत्वादित्यर्थः। यद्वा प्रमाणप्रश्नं समाधायाक्षेपं परिहरति॥ तस्मादिति॥ अहमित्यध्यासस्य प्रमात्रन्तर्गतत्वेनादोषत्वादविद्यावदाश्रयाण्यपि प्रमाणान्येवेति योजना। सति प्रमातरि पश्चाद्भवन्दोष इत्युच्यते यथा काचादिः, अविद्या तु प्रमात्रन्तर्गतत्वान्न दोषः, येन प्रत्यक्षादीनामप्रामाण्यं भवेदिति भावः। ननु यदुक्तमन्वयव्यतिरेकाभ्यां व्यवहारोऽध्यासकार्य इति तदयुक्तं विदुषामध्यासाभावेऽपि व्यवहारदृष्टेरित्यत आह॥ पश्वादिभिश्चेति॥ "च" शब्दः शङ्कानिरासार्थः। किं विद्वत्त्वं 'ब्रह्मास्मीति" साक्षात्कारः? उत यौक्तिकमात्मानात्मभेदज्ञानं? आद्ये "बाधिताध्यासानुवृत्त्या व्यवहार" इति समन्वयसूत्रे वक्ष्यते। द्वितीये परोक्षज्ञानस्यापरोक्षभ्रान्त्यनिवर्त्तकत्वात् विवेकिनामपि व्यवहारकाले पश्वादिभिरविशेषादध्यासवत्त्वेन तुल्यत्वाद्व्यवहारोऽध्यासकार्य्य इति युक्तमित्यर्थः। अत्रायं प्रयोगः विवेकिनोऽध्यासवन्तो व्यवहारित्वात् पश्वादिवदिति। तत्र संग्रहवाक्यं व्याकुर्वन् दृष्टान्ते हेतुं स्फुटयति॥ यथा हीति॥ विज्ञानस्यानुकूलत्वं प्रतिकूलत्वं चेष्टानिष्टसाधनगोचरत्वं, तद्देशोदाहरति॥ यथेति॥ अयं दण्डो मदनिष्टसाधनं दण्डत्वात् अनुभूतदण्डवत्। इदं तृणं इष्टसाधनं अनुभूतजातीयत्वात् अनुभूततृणवत् इत्यनुमाय व्यवहरन्तीत्यर्थः। अधुना

वर्त्तन्ते, तद्विपरीतान् प्रति अभिमुखीभवन्ति । अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः । पश्वादीनाञ्च प्र- प्रसिद्ध एवाविवेकपूर्वकः प्रत्यक्षादिव्यवहारः । तत्सामान्यदर्शनाद्व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्कालः समान इति निश्चीयते । शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते, तथापि न वेदान्तवेद्यमशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते । अनुपयोगादधिकारविरो

---

हेतोः पक्षधर्मतामाह ॥ एवमिति ॥ व्युत्पन्नचित्ता अपीत्यन्वयः । विवेकिनोऽपीत्यर्थः । फलितमाह ॥ अत इति ॥ अनुभवबलादित्यर्थः ॥ समान इति ॥ अध्यासकार्यत्वेन तुल्य इत्यर्थः । नन्वस्माकं प्रवृत्तिरध्यासादिति न पश्वादयो ब्रुवन्ति, नापि परेषामेतत् प्रत्यक्षम्, अतः साध्यविकलो दृष्टान्त इति नेत्याह ॥ पश्वादीनाञ्चेति ॥ तेषामात्मानात्मनोर्ज्ञानमात्रमस्ति न विवेकः, उपदेशाभावात्, अतः सामग्रीसत्त्वादध्यासस्तेषां प्रसिद्ध इत्यर्थः । निगमयति ॥ तत्सामान्येति ॥ तैः पश्वादिभिः सामान्यं व्यवहारवत्त्वं तस्य दर्शनाद्विवेकिनामप्ययं व्यवहारः समान इति निश्चीयत इति सम्बन्धः । समानत्वं व्यवहारस्याध्यासकार्यत्वमेतत्प्रकृतं पुरस्तात् । तत्को-क्तान्वयव्यतिरेकौ स्मारयति ॥ तत्काल इति ॥ तस्याध्यासस्य काल एव कालो यस्य स तत्कालः । यदा अध्यासस्तदा व्यवहारः । तदभावे सुषुप्तौ तदभाव इत्युक्तान्वयादिमानिति यावत् । अतो व्यवहारलिङ्गाद्विवेकिनामपि देहादिष्वहंममाभिमानोऽस्तीत्यनवद्यम् । ननु लौकिकस्य व्यवहारस्याध्यासिकत्वेऽपि ज्योतिष्टोमादिव्यवहारस्य नाध्यासजन्यत्वं, तस्य देहातिरिक्तात्मज्ञानपूर्वकत्वादित्याशङ्क्य हेतुमङ्गीकरोति ॥ शास्त्रीय इति ॥ तर्हि कथं वैदिककर्मणोऽध्यासजन्यत्वमित्याशङ्क्य किं तत्र देहान्यात्मधीमात्रमपेक्षितम् उत आत्मतत्त्वज्ञानम्? आद्ये तस्याध्यासा-

णाच्च। प्राक् च तथाभूतात्मविज्ञानात् प्रवर्त्तमानं शास्त्रमविद्यावद्विषयत्वं नातिवर्त्तते। तथा हि ब्राह्मणो यजेतेत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्त्तन्ते। अध्यासो नाम "अतस्मिंस्तद्बुद्धिरिति" अवोचाम। तद्यथा पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति तथा देहधर्मान् स्थूलोऽहं कृशोऽहं तिष्ठामि गच्छामि लङ्घयामि चेति। तथेन्द्रियधर्मान् मूकः क्लीबो बधिरः काणोऽन्धोऽहमिति। तथान्तःकरणधर्मान् कामसङ्कल्पविचिकित्साध्यवसायादीन्, एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्य

बाधकत्वात् तत्सिद्धिरित्याह ॥ तथापीति ॥ [illegible]

दान्त इति ॥ क्षुत्पिपासादिमतो जातिविशेषवानहं संसारीति ज्ञानं कर्मण्यपेक्षितं न तद्विपरीतात्मतत्त्वज्ञानं, अनुपयोगात् प्रवृत्तिबाधाच्चेत्यर्थः। शास्त्रीयकर्मणोऽध्यासजन्यत्वं निगमयति ॥ प्राक् चेति ॥ अध्यासे आगमं प्रमाणयति ॥ तथा हीति ॥ यथा प्रत्यक्षानुमानार्थापत्तयोऽध्यासे प्रमाणं तथागमोऽपीत्यर्थः। "ब्राह्मणो यजेत" "न ह वै स्नात्वा भिक्षेत" "अष्टवर्षमुपनयीत" "कृष्णकेशोऽग्नीनादधीत" इत्यागमो ब्राह्मणादिपदैरधिकारिणं वर्णाद्यभिमानिनमनुवदन् अध्यासं गमयतीति भावः। एवमध्यासे प्रमाणसिद्धेऽपि कस्य कुत्राध्यास इति जिज्ञासायां तमुदाहर्तुं लक्षणं स्मारयति ॥ अध्यासो नामेति ॥ उदाहरति ॥ तद्यथेति ॥ तत्र यथा यथा स्फुटं भवति तथोदाह्रियत इत्यर्थः। स्वदेहाद्भेदेन प्रत्यक्षाः पुत्रादयो बाह्याः, तद्धर्मान् साकल्यादीन् देहविशिष्टात्मन्यध्यस्यति, तद्धर्मसंभवात् स्वस्मिंस्तद्धर्मानध्यस्यतीत्यर्थः। भेदापरोक्षज्ञाने तद्धर्माध्यासायोगात् अन्यथाख्यातेरनङ्गीकाराच्चेति द्रष्टव्यम्। देहेन्द्रियधर्मानात्मनो विविक्तात्मन्यध्यस्यतीत्याह ॥ तथेति ॥ कृशत्वादिध

गात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति । एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो

---

ममेति देहादेरात्मनि तादात्म्येन कल्पितत्वात्तद्धर्मा आत्मन्यध्यस्ता इति मन्तव्यम् । अज्ञातत्वरूपे साक्षिणि मनोधर्माध्यासमाह ॥ तथान्तःकरणेति ॥ धर्माध्यासमुक्त्वा तद्वदेव धर्म्यध्यासमाह ॥ एवमिति ॥ अन्तःकरणसाक्षिण्यभेदेनाध्यस्य तद्धर्मान् कामादीन् अध्यस्यतीति मन्तव्यम् । स्वप्रचारा मनोवृत्तयः प्रातिलोम्येनाञ्चजडदुःखात्मकाहङ्कारादिविलक्षणतया सच्चित्सुखात्मकत्वेनाञ्चति प्रकाशत इति प्रत्यक् । एवमात्मन्यनात्मतद्धर्माध्यासमुदाहृत्यानात्मन्यात्मनोऽपि संसृष्टत्वेनाध्यासमाह ॥ तञ्चेति ॥ अहमित्यध्यासे चिदात्मनो भानं वाच्यम्, अन्यथा जगदान्ध्यापत्तेः । न चानध्यस्तस्याध्यासे भानमस्ति । तस्मादहङ्कारादाविदमिवात्मनः संसर्गाध्यास एष्टव्यः । "तद्विपर्ययेणेति" तस्मादध्यस्तस्य जडस्य विपर्ययोऽधि- ष्ठानतादात्म्येनास्फुरति यावत् । तथापि केवलात्मनः संसर्गः, मनस्त्वज्ञानस्यानोपहितस्य देहादौ मनउपहितस्येति विशेषः । एवमात्मनि बुद्ध्याद्यध्यासात् कर्तृत्वादिलाभः । बुद्ध्यादौ चात्माध्यासाच्चैतन्यलाभ इति भावः । वर्णिताध्यासमुपसंहरति ॥ एवमयमिति ॥ अनाद्यविद्यात्मकतया कार्याध्यासस्यानादित्वं अध्यासात् संस्कारस्ततोऽध्यास इति प्रवाहतो नैसर्गिकत्वम् ॥ एवमुपादानं निमित्तञ्चोक्तं भवति । ज्ञानं विना ध्वंसाभावादानन्त्यम् । तदुक्तं भगवद्गीतासु । "न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठेति" । हेतुरुक्त्वा स्वरूपमाह ॥ मिथ्येति ॥ मिथ्या माया तया प्रतीयत इति प्रत्ययः कार्यप्रपञ्चः, तत्प्रतीतिश्चेत्युभयस्वरूप इत्यर्थः । तस्य कार्यमाह ॥ कर्तृत्वेति ॥ प्रमाणं निगमयति ॥ सर्वेति ॥ साक्षिप्रत्यक्षमेवाध्यासधर्मिग्राहकं मानं, अनुमानादिकन्तु सम्भावनार्थमित्यभिप्रेत्य प्रत्यक्षोपसंहारः कृतः । एवमध्यासं वर्णयित्वा तत्साध्ये विषयप्रयोजने दर्शयति ॥ अस्येति ॥ कर्तृत्वाद्यनर्थहेतोरध्यासस्य समूलस्यात्यन्तिकनाशो मोक्षः स केनेत्यत आह ॥ आत्मैकत्वेति ॥ ब्रह्मात्मैक्यसाक्षात्कारस्य प्रतिपत्तिः श्रवणादिभिरप्रतिबन्धेन लाभ-

मिथ्याप्रत्ययरूपस्य कर्तृत्वभोक्तृत्वप्रवर्तकस्य सर्वलोकप्रत्यक्षस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते। यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः। वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रम्।

---

स्तस्या इत्यर्थः ॥ विद्याया कारणमाह ॥ सर्वे इति ॥ आरभ्यन्ते अधीता विचार्यन्ते इत्यर्थः। विचारितवेदान्तानां ब्रह्मात्मैक्यं विषयो मोक्षः फलमित्युक्तं भवति। अर्थात्तद्विचारात्मकशास्त्रस्यापि ते एव विषयप्रयोजने इति ज्ञेयम्। ननु वेदान्तेषु प्राणाद्युपास्तीनां भानादात्मैक्यमेव तेषामर्थ इति कथमित्यत आह ॥ यथा चेति ॥ शरीरमेव शरीरकं कुत्सितत्वात्तन्निवासी शारीरको जीवस्तस्य ब्रह्मत्वविचारो मीमांसा तस्यामित्यर्थः। उपास्तीनां चित्तैकाग्र्यद्वारात्मैक्यज्ञानार्थत्वात्तद्वाक्यानामपि महातात्पर्यमैक्ये इति विवक्ष्यते। एवमध्यासोक्त्या ब्रह्मात्मैक्ये विरोधाभावेन विषयप्रयोजनवत्त्वाच्छास्त्रमारम्भणीयमिति दर्शितम् ॥ * ॥ इति प्रथमवर्णकम् ॥ * ॥ विचारस्य शास्त्राद्विषया वेदान्ता, तेषां गतार्थत्वागतार्थत्वाभ्यामारम्भसन्देहे कृत्स्नस्य वेदस्य विधिपरत्वाद्विधेश्च "अथातो धर्मजिज्ञासा" इत्यादिना पूर्वतन्त्रेण विचारितत्वादवगतार्थाद्व्युत्पत्ति-व्यवहितविषयाभावान्नारम्भ इति प्राप्ते ब्रूते ॥ वेदान्तेति ॥ वेदान्तविषयकपूजितविचारात्मकशास्त्रस्य व्याख्यातुमिष्टस्य सूत्रसन्दर्भस्येदं प्रथमसूत्रमित्यर्थः। यदि विधिरेव वेदार्थः स्यात्तदा सर्वज्ञो बादरायणो ब्रह्मजिज्ञासां न ब्रूयात् ब्रह्मणि मानाभावात्। अतो ब्रह्मणो जिज्ञास्यत्वोक्त्या केनापि तन्त्रेणानवगतब्रह्मपरवेदान्तविचार आरम्भणीय इति सूत्रकृद्दर्शयति। तच्च "व्याचिख्यासितस्य" इति पदेन भाष्यकारो बभाषे ॥ * ॥ इति द्वितीयवर्णकम् ॥ * ॥ एवं वर्णकद्वयेन वेदान्तविचारस्य कर्तव्यताया विषयप्रयोजनवत्त्वमगतार्थत्वञ्चेति हेतुद्वयं सूत्रस्यार्थिकार्थं व्याख्यायांशरंख्याख्यामारभमाणः पुनरर्थाधिकारिभावाभावाभ्यां शास्त्रारम्भ-

## अथातो ब्रह्मजिज्ञासेति।१।

तत्राथशब्द आनन्तर्यार्थः परिगृह्यते नाधिकारार्थः ब्रह्मजिज्ञासाया अनधिकार्यत्वात्। मङ्गलस्य च वाक्यार्थे समन्वयाभावात्। अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवति। पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकात्। सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासापूर्ववृत्तं वेदाध्ययनं नियमेनापेक्षते एवं ब्रह्मजिज्ञासापि यत्पूर्व

वृत्ते सति अथशब्दस्यानन्तर्यार्थकत्वोक्त्या अधिकारिणं साधयति ॥ "तत्राथशब्द" इति ॥ कृत्स्नस्यार्थः। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इति अथशब्दस्य बहवोऽर्थाः सन्ति। तत्राथ "योगानुशासनम्" इत्यत्र सूत्रे यथा अथशब्द आरम्भार्थकः योगशास्त्रमारभ्यत इति तद्वदत्र किं न स्यादित्यत आह ॥ नाधिकारार्थ इति ॥ अयमाशयः। किं जिज्ञासापदं ज्ञानेच्छापरमुत विचारलक्षकम्? आद्ये अथशब्दस्यारम्भार्थत्वे ब्रह्मज्ञानेच्छाऽऽरभ्यत इति सूत्रार्थः स्यात्, न च सोऽसङ्गतः। तस्या अनारभ्यत्वात्। न हि प्रत्यधिकरणं इच्छा क्रियते किन्तु तया विचारः। न द्वितीयः। कर्त्तव्यपदाध्याहारं विना विचारलक्षकत्वायोगात्। अध्याहृते च तेनैवारम्भोक्तेरथशब्दवैयर्थ्यात् किन्त्वधिकारिसिद्ध्यर्थमानन्तर्यार्थतैव युक्तेति। अधुना सम्भावितमर्थान्तरं दूषयति ॥ मङ्गलस्येति ॥ वाक्यार्थो विचारकर्त्तव्यता। न हि तत्र मङ्गलशब्दस्य कर्त्तृत्वादिनान्वयोऽस्तीत्यर्थः। ननु सूत्रकृता शास्त्रादौ मङ्गलं कार्य्यमिति अथशब्दः प्रयुक्त इति चेत् सत्यम्। न तस्यार्थो मङ्गलं किन्तु तच्छ्रवणमुच्चारणञ्च मङ्गलं करोति तदर्थस्त्वानन्तर्यमेवेत्याह ॥ अर्थान्तरेति ॥ अर्थान्तरं आनन्तर्यम्। श्रुत्या श्रवणेन शङ्खवीणादिनादश्रवणवदोङ्कारार्थशब्दयोः श्रवणं मङ्गलफलकम्।

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥"

इति स्मरणादिति भावः। ननु प्रपञ्चो मिथ्येति मते सति, अथ मत +

वृत्तं नियमेनापेक्ष्यते तद्वक्तव्यम्। स्वाध्यायानन्तर्यं तु समानम्। नन्विह कर्मावबोधानन्तर्यं विशेषः। न। धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः। यथा

---

प्रपञ्चं सत्त्वमित्यत्र पूर्वप्रकृतार्थादुत्तरार्थस्यार्थान्तरत्वार्थोऽथशब्दो दृष्टः। तथात्र किं न स्यादित्यत आह॥ पूर्वेति॥ फलतः फलत्वेनेत्यर्थः। ब्रह्मजिज्ञासायाः पूर्वं कश्चिद्विशेषः प्रकृतो नास्ति यस्मात्तस्या अर्थान्तरत्वमथशब्देनोच्येत। यतः कुतश्चिदर्थान्तरत्वं सूत्रकृता न वक्तव्यं, फलाभावात्। यदि फलस्य जिज्ञासापदोक्तकर्तव्यविचारस्य हेतुत्वेन यत्पूर्वं प्रकृतं तदपेक्षास्तीति अपेक्षाबलात् प्रकृतहेतुमाक्षिप्य ततोऽर्थान्तरत्वमुच्येत, तदर्थान्तरत्वमानन्तर्येऽन्तर्भवति हेतुफलभावज्ञानायानन्तर्यस्यावश्यं वाच्यत्वात्। तस्मादिदमर्थान्तरमित्युक्ते तस्य हेतुत्वाप्रतीतेः। तस्मादिदमनन्तरमित्युक्ते भवत्येव हेतुत्वप्रतीतिः। न चाश्वादनन्तरो गौरित्यत्र हेतुत्वभानापत्तिरिति वाच्यं। तयोर्देशतः कालतो वा व्यवधानेनानन्तर्यस्यामुख्यत्वात्। अत्र सामग्रीफलयोरेव मुख्यमानन्तर्यं, अव्यवधानात्। तस्मिन्नुक्ते सत्यर्थान्तरत्वं न वाच्यं ज्ञातत्वादफलत्वाच्चेति भावः। फलस्य विचारस्य पूर्वप्रकृतहेत्वपेक्षाया बलाद्यदर्थान्तरत्वं तस्यानन्तर्याभेदात् न पृथगथशब्दार्थत्वमित्यध्याहृत्य भाष्यं योजनीयम्। यद्वा पूर्वप्रकृतेऽर्थेऽपेक्षा यस्या अर्थान्तरतायास्तस्याः फलज्ञानं तद्द्वारा ऽऽनन्तर्याव्यतिरेकात्तज्ज्ञाने तस्या ज्ञानतोऽन्तर्भावान्नाथशब्दार्थतेत्यर्थः। नन्वानन्तर्यार्थकत्वेऽप्यानन्तर्यस्यावधिः क इत्यत्राशङ्क्याह॥ सति चेति॥ यन्नियमेन पूर्ववृत्तं पूर्वभावि असाधारणकारणं पुष्कलकारणमिति यावत्, तदेवावधिरिति वक्तव्यमित्यर्थः। नन्वस्तु धर्मविचार इव ब्रह्मविचारेऽपि वेदाध्ययनं पुष्कलकारणमित्यत आह॥ स्वाध्यायेति॥ समानं ब्रह्मविचारे साधारणकारणं न पुष्कलकारणमित्यर्थः। ननु संयोगपृथक्त्वन्यायेन "यज्ञेन दानेन" इत्यादिश्रुत्या "यज्ञादिकर्माणि ज्ञानाय विधीयन्ते" इति सर्वापेक्षाधिकरणे वक्ष्यते। तथा च पूर्वतन्त्रेण तदवबोधः पुष्कलकारणमिति शङ्कते॥ नन्विति॥

च हृदयाद्यवदानानामानन्तर्यनियमः क्रमस्य विवक्षितत्वात्, न तथेह क्रमो विवक्षितः । शेषशेषित्वेऽधिकृताधि

---

इह ब्रह्मजिज्ञासायाः । विशेषोऽसाधारणं कारणम् । "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति जैमिनिसूत्रम् । तदर्थस्तु । एकस्य कर्मण उभयत्वेऽनेकफलसम्बन्धे संयोगः, उभयसम्बन्धबोधकं वाक्यं तस्य पृथक्त्वं भेदः स हेतुः । तस्मात्त्वापि ज्योतिष्टोमादिकर्मणां स्वर्गादिफलकानामपि "यज्ञेन दानेन" इत्यादि वचनात् ज्ञानार्थत्वमस्तीति परिहरति ॥ नेत्यादिना ॥ अयमाशयः । न तावत् पूर्वतन्त्रस्थन्यायसहस्रं ब्रह्मज्ञाने तद्विचारे वा पुष्कलं कारणं तस्य धर्मनिर्णयमात्रहेतुत्वात्, नापि कर्मनिर्णयः तस्यानुष्ठानहेतुत्वात् । न हि धूमाग्न्योरिव धर्मब्रह्मणोर्व्याप्तिरस्ति, यया धर्मज्ञानाद् ब्रह्मज्ञानं भवेत् । यद्यपि शुद्धिविवेकादिद्वारा कर्माणि हेतवस्तथापि नैषां नाधिकारिविशेषणत्वं अज्ञातानां तेषां जन्मान्तरकृतानामपि फलहेतुत्वात् । अधिकारिविशेषणं ज्ञातमेव प्रवृत्तिपुष्कलकारणमानन्तर्याभिधत्वेन वक्तव्यम् । अतः कर्माणि तदवबोधस्तन्न्यायविचारो वा नावधिरिति न ब्रह्मजिज्ञासायाः धर्मजिज्ञासानन्तर्यमिति । ननु धर्मब्रह्मजिज्ञासयोः कार्यकारणत्वाभावेऽप्यानन्तर्यैकत्वद्वारा क्रमज्ञानार्थोऽथशब्दः । "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" इत्यवदानानां क्रमज्ञानार्थाथशब्दवदित्याशङ्क्याह ॥ यथेति ॥ अवदानानामानन्तर्यनियमः क्रमो यथाऽथशब्दार्थस्तस्य विवक्षितत्वात् न तथेह धर्मब्रह्मजिज्ञासयोः क्रमो विवक्षितः । एककर्तृकत्वाभावेन तयोः क्रमानपेक्षणात् । अतो न क्रमार्थोऽथशब्द इत्यर्थः । ननु तयोरेककर्तृकत्वं कुतो नास्तीत्यत आह ॥ शेषेति ॥ येषामेकप्रधानशेषता यथावदानानां प्रयाजादीनां च, ययोश्च शेषशेषित्वं यथा प्रयाजदर्शयोः, यस्य चाधिकृताधिकारत्वं यथा अपां प्रणयनं दर्शपूर्णमासाङ्गमाश्रित्य "गोदोहनेन पशुकामस्य" इति विहितस्य गोदोहनस्य, यथा वा "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति दर्शाद्युत्तरकाले विहितस्य सोमयागस्य दर्शाद्यधिकृताधिकारत्वं तेषामे-

कार्ं वा प्रमाणाभावाद्धर्म्मब्रह्मजिज्ञासयोः, फलजिज्ञास्यभेदाच्च । अभ्युदयफलं धर्म्मज्ञानं, तच्चानुष्ठानापेक्षम् ।

कर्त्तृकत्वं भवति । ततश्चैकप्रयोगवचनगृहीतानां तेषां युगपदनुष्ठानासम्भवात् क्रमाकाङ्क्षायां श्रुत्यादिभिर्हि क्रमो बोध्यते, नैव जिज्ञासयोः शेषशेषित्वे श्रुतिलिङ्गादिकं मानमस्ति । ननु "ब्रह्मचर्य्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेत्" इति श्रुत्या ।

"अधीत्य विधिवद्वेदान् पुत्रांश्चोत्पाद्य धर्म्मतः ।
इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्" ॥

इति स्मृत्या चाधिकृताधिकारत्वं भातीति । न ।
"ब्रह्मचर्य्यादेव प्रव्रजेत्" ।

"आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे" ।

इति श्रुतिस्मृतिभ्याम् । त्वयोदाहृतश्रुतिस्मृत्योरशुद्धचित्तविषयत्वावगमात् । एतदुक्तं भवति "यदि जन्मान्तरकृतकर्म्मभिः शुद्धं चित्तं तदा ब्रह्मचर्य्यादेव सन्न्यस्य ब्रह्म जिज्ञासितव्यं, यदि न शुद्धमिति रागेण ज्ञायते तदा गृही भवेत् तत्राप्यशुद्धौ वनी भवेत् तत्राप्यशुद्धौ तथैव कालमाकलयेत् वने शुद्धौ प्रव्रजेदिति" । तथा च श्रुतिः "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इति तस्मान्नानयोरधिकृताधिकारत्वे किञ्चिन्मानमिति भावः । ननु मीमांसयोः शेषशेषित्वमधिकृताधिकारत्वञ्च मास्तु । एकमोक्षफलकत्वेनैककर्त्तृकत्वं स्यादेव । वदन्ति हि "ज्ञानकर्म्मभ्यां मुक्तिः" इति समुच्चयवादिनः । एवमेकवेदार्थजिज्ञासुकत्वाच्चैककर्त्तृकत्वं । तथा चाग्नेयादिषड्यागानामेकस्वर्गफलकानां द्वादशाध्यायानाञ्चैकधर्म्मजिज्ञासुकानां क्रमवत्तयोः क्रमो विवक्षितः इति क्रमार्थोऽथशब्द इत्याशङ्क्याह ॥ फलेति ॥ फलभेदाज्जिज्ञास्यभेदाच्च न क्रमो विवक्षित इत्यनुषङ्गः । यथा सौर्य्यार्य्यमणप्राजापत्यचरूणां ब्रह्मवर्चसस्वर्गायुःफलभेदात्, यथा वा कामचिकित्सातन्त्रयोर्जिज्ञास्यभेदाच्च क्रमापेक्षा तद्वन्मीमांसयोर्न क्रमापेक्षेति भावः, तत्र फलभेदं विवृणोति ॥

निःश्रेयसफलं तु ब्रह्मविज्ञानं न चानुष्ठानान्तरापेक्षम्। भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, पुरुषव्यापारतन्त्रत्वात्। इह तु भूतं ब्रह्म जिज्ञास्यं नित्यवृत्तत्वात्, न पुरुषव्यापारतन्त्रं, चोदनाप्रवृत्तिभेदाच्च। या हि चोदना धर्मस्य लक्षणं सा स्वविषये नियुञ्जानैव पुरुषं

अभ्युदयेति॥ विषयाभिमुख्येनोदेतीत्यभ्युदयो विषयाधीनं सुखं स्वर्गादिकं तच्च धर्मज्ञानहेतोर्मीमांसायाः फलमित्यर्थः। न केवलं फलस्य स्वरूपतो भेदः किन्तु हेतुतोऽपीत्याह॥तच्चेति॥ ब्रह्मज्ञानहेतोर्मीमांसायाः फलं तु तद्विलक्षणमित्याह॥ निःश्रेयसेति॥ नित्यं निरपेक्षं श्रेयो निःश्रेयसं मोक्षस्तत् फलमित्यर्थः। ब्रह्मज्ञानस्य स्वोत्पत्तिव्यतिरिक्तमनुष्ठानं नापेक्षत इत्याह॥ न चेति॥ स्वरूपतो हेतुतश्च फलभेदान्न समुच्चय इति भावः। जिज्ञास्यभेदं विवृणोति॥ भव्यश्चेति॥ भवतीति भव्यः साध्य इत्यर्थः। साध्यत्वे हेतुमाह॥ नेति॥ तर्हि तुच्छत्वं नेत्याह॥ पुरुषेति॥ पुरुषव्यापारः प्रयत्नस्तन्त्रं हेतुर्यस्य तत्त्वादित्यर्थः। कृतिसाध्यत्वात् कृतिजनकज्ञानकाले धर्मस्यासत्त्वं न तुच्छत्वादित्यर्थः। ब्रह्मणो धर्माद्वैलक्षण्यमाह॥ इह त्विति॥ उत्तरमीमांसायामित्यर्थः॥ भूतमसाध्यं। तत्र हेतुः॥नित्येति॥ सदा सत्त्वादित्यर्थः। साध्यासाध्यत्वेन धर्मब्रह्मणोः स्वरूपभेदमुक्त्वा हेतुतोऽप्याह॥नेति॥ धर्मवत् कृत्यधीनं नेत्यर्थः। मानतोऽपि भेदमाह। चोदनेति॥ अज्ञातज्ञापकं वाक्यमत्र चोदना। तस्याः प्रवृत्तिर्बोधकत्वं तद्वैलक्षण्याच्च जिज्ञास्यभेद इत्यर्थः। सङ्ग्रहवाक्यं विवृणोति॥ या हीति। लक्षणं प्रमाणं "स्वर्गकामो यजेत" इत्यादिवाक्यं हि स्वविषये धर्मे यागादिकरणस्वर्गादिफलकभावनारूपे फलहेतुयागादिगोचरनियोगे वा हितसाधने यागादौ वा पुरुषं प्रवर्त्तयदेवावबोधयति। 'अयमात्मा ब्रह्म' इत्यादिवाक्यं तु स्वार्थं केवलमप्रपञ्चं ब्रह्म बोधयत्येव न प्रवर्त्तयति, विषयाभावादित्यर्थः। तत्त्वबोध एव विषय इत्याह॥ न पुरुष इति॥

मवबोधयति। ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं, अवबोधस्य चोदनाजन्यत्वान्न पुरुषोऽवबोधे नियुज्यते। यथाऽक्षार्थसन्निकर्षेणार्थावबोधे तद्वत्। तस्मात् किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति। उच्यते। नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वञ्च। तेषु हि सत्सु प्रागपि धर्म्मजिज्ञासाया ऊर्द्ध्वञ्च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुञ्च, न विपर्य्यये। तस्मादथशब्देन यथोक्तसाधनसम्पत्त्यानन्तर्य्यमुपदिश्यते। अतःशब्दो हेत्वर्थः। यस्माद्वेद एवाग्नि-

---

ब्रह्मचोदनया पुरुषोऽवबोधे न प्रवर्त्त्यत इत्यत्र हेतुं पूर्व्ववाक्येनाह ॥ अवबोधस्येति ॥ स्वजन्यज्ञाने स्वयं प्रमाणं न प्रवर्त्तकमित्यत्र दृष्टान्तमाह ॥ यथेति ॥ मानादेव बोधस्य जातत्वात् जाते च विध्ययोगात् न वाक्यार्थज्ञाने पुरुषप्रवृत्तिः। तथा च प्रवर्त्तकमानमेयो धर्म्मः, उदासीनमानमेयं ब्रह्म, इति जिज्ञास्यभेदात् न तन्मीमांसयोः क्रमार्थोऽथशब्द इति भावः। एवमथशब्दस्यार्थान्तरासम्भवादानन्तर्य्यवाचित्वे सति तदवधित्वेन पुष्कलकारणं वक्तव्यमित्याह ॥ तस्मादिति ॥ उपदिश्यते ब्रह्मकर्त्तेति शेषः। तत्किमित्यत आह ॥ उच्यत इति ॥ विवेकादीनामागमिकत्वेन प्रामाणिकत्वं पुरस्तादेवोक्तं। लौकिकव्यापारान्मनस उपरमः शमः। वाह्यकरणानामुपरमो दमः। ज्ञानार्थं विहितनित्यादिकर्म्मसन्न्यास उपरतिः। शीतोष्णादिद्वन्द्वसहनं तितिक्षा। निद्रालस्यप्रमादत्यागेन मनःस्थितिः समाधानं। सर्व्वत्रास्तिकता श्रद्धा। एतत्षट्कप्राप्तिः शमादिसम्पत्। अत्र विवेकादौ नामुत्तरोत्तरहेतुत्वेनाधिकारिविशेषणत्वं मन्तव्यं। तेषामन्वयव्यतिरेकाभ्यां ब्रह्मजिज्ञासाहेतुत्वमाह ॥ तेष्विति ॥ अथ कथञ्चित् कुतूहलितया ब्रह्मविचारप्रवृत्तस्यापि फलपर्य्यन्तं तज्ज्ञानानुदयाद्व्यतिरेकसिद्धिः अथवा व्याख्यानमुपसंहरति ॥ तस्मादिति ॥ नन्वविवेका

होत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति, "तद्यथेह कर्म्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत इत्यादि" तथा ब्रह्मविज्ञानादपि परं पुरुषार्थं दर्शयति, "ब्रह्मविदाप्नोति परमित्यादि", तस्माद्यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्त्तव्या। ब्रह्मणो जिज्ञासा

---

दिकं न सम्भवति। "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इत्यादिश्रुत्या कर्म्मफलस्य नित्यत्वेन ततो वैराग्यासिद्धेः। जीवस्य ब्रह्मस्वरूपमोक्षस्यायुक्तः, भेदात्, सुखस्य लोष्टादिवत् पुरुषार्थत्वायोगाच्च। ततो न मुमुक्षासम्भव इत्याक्षेपपरिहारार्थोऽतःशब्दः, तं व्याचष्टे॥ अतःशब्द इति॥ अथशब्देनानन्तर्य्यवाचिना तदवधित्वेनार्थाद्विवेकादिचतुष्टयस्य ब्रह्मजिज्ञासाहेतुत्वं यदुक्तं तस्यार्थिकहेतुत्वस्याक्षेपनिरासायानुवादकोऽतःशब्द इत्यर्थः। उक्तं विवृणोति॥ यस्मादिति॥ तस्मादित्युत्तरेण सम्बन्धः। "यदल्पं तन्मर्त्यं यत् कृतकं तदनित्यम्" इति न्यायवती "तद्यथेह" इत्यादिश्रुतिः कर्म्मफलाक्षयत्वश्रुतेर्बाधिका। तस्मात् "कृतोऽन्यदार्त्तम्" इति श्रुत्या अनात्ममात्रस्यानित्यत्वविवेकाद्वैराग्यलाभ इति भावः। मुमुक्षां सम्भावयति॥ तथेति यथा वेदः कर्म्मफलानित्यत्वं दर्शयति तथा ब्रह्मज्ञानात् प्रशान्तशोकानन्तमपारं स्वयंज्योतिरानन्दं दर्शयतीत्यर्थः। जीवत्वादेरध्यासोक्त्या ब्रह्मत्वसम्भव उक्त एवेति भावः। एवमथातःशब्दाभ्यां पुष्कलकारणवतोऽधिकारिणः समर्पणाच्छास्त्रमारब्धव्यमित्याह॥ तस्मादिति॥ सूत्रवाक्यपूरणार्थमध्याहृतकर्त्तव्यपदान्वयार्थं ब्रह्मजिज्ञासापदेन विचारं लक्षयित्वा तस्य स्वाभिमतसमासकथनेनान्वयार्थं दर्शयति॥ ब्रह्मण इति॥ ननु "धर्म्माय जिज्ञासा" इतिवत् "ब्रह्मजिज्ञासा" इति चतुर्थीसमासः किं न स्यादिति चेत्। उच्यते। जिज्ञासापदस्य हि मुख्यार्थ इच्छा, तस्याः प्रथमं कर्म्मकारकमपेक्षितं, पश्चात् फलं,

ब्रह्मजिज्ञासा । ब्रह्म च वक्ष्यमाणलक्षणं "जन्माद्यस्य यतः" इति । अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यम् । ब्रह्मण इति कर्मणि षष्ठी न शेषे । जिज्ञास्यापेक्षत्वाज्जिज्ञासायाः, जिज्ञास्यान्तरानिर्देशाच्च । ननु शेषषष्ठीपरिग्रहेऽपि ब्रह्मणो जिज्ञासाकर्मत्वं न विरुध्यते,

तत्त्वादौ कर्मज्ञानार्थे षष्ठीसमासो युक्तः । कर्मण्युक्ते सत्यर्थात् फलमुक्तं भवति, इच्छाया कर्मण एव फलत्वात् । यथा "स्वर्गमिच्छा" इत्युक्ते स्वर्गस्य फलत्वं लभ्यते तद्वत् । अत एव 'धर्मजिज्ञासा" इत्यत्रापि सा हि तस्य ज्ञातुमिच्छेति इच्छां गृहीत्वा षष्ठीसमासो दर्शितः । विचारलक्षणायान्तु विचारस्य क्लेशात्मकतया प्रथमं वृत्तिविषयत्वेन प्रतिबिम्बितत्वेन च फलाकाङ्क्षत्वात् धर्माय जिज्ञासेति चतुर्थीसमास उक्तः, तथा वृत्तिकारैः "ब्रह्मणे जिज्ञासा" इत्युक्तश्चेदस्तु ज्ञानत्वेन ब्रह्मणः फलत्वादिति । अधुना ब्रह्मपदार्थमाह ॥ ब्रह्म चेति ॥ ननु "ब्रह्म सत्यमिदं ब्रह्म जानाति ब्रह्मा स्वयम्भुर्ब्रह्मा प्रजापतिः" इति श्रुतौ लोके च ब्राह्मणत्वजातौ, जीवे वेदे कमलासने च ब्रह्मशब्दः प्रयुज्यत इत्याशङ्क्याह ॥ अत एवेति ॥ जगत्कारणत्वलक्षणप्रतिपादकसूत्रबाधाद्व्यप्रसङ्गादेवेत्यर्थः । वृत्त्यन्तरे शेषे षष्ठीत्युक्तं दूषयति ॥ ब्रह्मण इतीति ॥ सम्बन्धसामान्यं शेषः । जिज्ञासेत्यत्र सन्प्रत्ययवाच्याया इच्छाया ज्ञानं कर्म । तस्य ज्ञानस्य ब्रह्म कर्म । तत्र सकर्मकक्रियाया कर्मः ज्ञानं विना ज्ञातुमशक्यत्वात् । इच्छाया विषयज्ञानजन्यत्वात् प्रथमापेक्षितं कर्मैव षष्ठ्या वाच्यं न शेष इत्यर्थः । ननु प्रमाणादिकमन्यदेव तत् कर्मास्तु ब्रह्म तु शेषितया सम्बध्यतामित्याह ॥ जिज्ञास्यान्तरेति ॥ श्रुतं कर्म त्यक्त्वाऽश्रुतं कल्प्यम् "पिण्डमुत्सृज्य करं लेढि" इति न्यायमनुसरतीति भावः । गूढाभिसन्धिः शङ्कते ॥ नन्विति ॥ षष्ठीशेष [पा० २।३।५०]

सम्बन्धसामान्यस्य विशेषनिष्ठत्वात्, एवमपि प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयतो व्यर्थः प्रयासः स्यात्, न व्यर्थो ब्रह्माश्रिताशेष विचार-प्रतिज्ञानार्थत्वादिति चेत् ॥ न ॥ प्रधानपरिग्रहे तदपेक्षिता-नामर्थाक्षिप्तत्वात्। ब्रह्म हि ज्ञानेनाप्तुमिष्टतमत्वात् प्र-धानं। तस्मिन् प्रधाने जिज्ञासाकर्मणि परिगृहीते यै-र्जिज्ञासितैर्विना ब्रह्म जिज्ञासितं न भवति तान्यर्थाक्षि-प्तान्येवेति न पृथक् सूचयितव्यानि यथा "राजासौ गच्छति" इत्युक्ते सपरिवारस्य राज्ञो गमनमुक्तं भवति तद्वत्। श्रु-त्यनुगमाच्च। "यतो वा इमानि भूतानि जायन्ते" इत्याद्याः

---

इति विधानात् षष्ठ्या सम्बन्धमात्रं प्रतीतमपि विशेषाकाङ्क्षायां कर्तृकर्मक्रियायाविधानात् कर्मत्वे पर्यवस्यतीत्यर्थः । अभिव्य-क्तिरूपज्ञानविषयत्वाच्च ॥ एवमपीति ॥ कर्मत्वाभेदेऽपि प्रत्यक्ष-कर्तृकर्मणोः कृतीति [पा० २ । ३ । ६५ ] सूत्रेण जिज्ञासा-पदस्थात्प्रत्ययात्मकत्वेन कृदन्तस्य योगे विहितं प्रथमापेक्षित-स्य कर्मत्वं मुक्त्वा परोक्षमप्यह कल्पयत इत्यर्थः । शेषषष्ठी स्वाभिप्र-त्विमुद्घाटयति ॥ न व्यर्थ इति ॥ शेषषष्ठ्या ब्रह्मसम्बन्धिनी जिज्ञासा प्रतिज्ञाता भवति । तत्र यानि ब्रह्माश्रितानि लक्षणप्रमाणयुक्तिज्ञानसाधन-फलानि तेषामपि विचारः प्रतिज्ञातो भवति ॥ तज्जिज्ञासाया अपि ब्रह्मज्ञानार्थत्वेन ब्रह्मसम्बन्धित्वात् । कर्मणि षष्ठ्यां तु ब्रह्मकर्मक एव विचारः प्रतिज्ञातो भवतीत्यसम्बन्धिना शेषषष्ठीत्युच्यते । अतो न प्रयासो न व्यर्थः । ब्रह्मतत्सम्बन्धिनां सर्वेषां विचारप्रतिज्ञानमर्थः । फलं यस्य तस्मादित्यर्थः । तत्प्रयोजनाद् फलं न युक्तम् । सूत्रेण सूचितः प्रधानस्य ब्रह्मणो विचारे प्रतिज्ञाते सति तदुपकरणानां विचारस्यार्थिकप्रतिज्ञाया उदितत्वादित्याह विरोधिनी ॥ न प्रधानेति ॥ परिगृहीतमर्थं पश्चान्

श्रुतयः, "तद्विजिज्ञासस्व तद्ब्रह्म" इति प्रत्यक्षमेव ब्रह्मणो जिज्ञासाकर्मत्वं दर्शयन्ति। तच्च कर्मणि षष्ठीपरिग्रहे सूत्रेणानुगतं भवति। तस्माद्ब्रह्मण इति कर्मणि षष्ठी। ज्ञातुमिच्छा जिज्ञासा। अवगतिपर्य्यन्तं ज्ञानं सन्वाच्याया इच्छायाः कर्म, फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रमाणेनावगन्तुमिष्टं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः। निःशेषसं-

---

व्याकरोति॥ ब्रह्मण इत्यादिना॥ "तद्विजिज्ञासस्व" इति मूलश्रुत्यनुसाराच्च कर्म्मणि षष्ठीत्याह॥ श्रुत्यनुगमाच्चेति॥ श्रुतिसूत्रयोरैकार्थ्यलाभाच्चेत्यर्थः। जिज्ञासापदस्यावयवार्थमाह॥ ज्ञातुमिति॥ नन्वनवगते वस्तुनीच्छाया अदर्शनात्तस्या मूलं विषयज्ञानं वक्तव्यम्, ब्रह्मज्ञानन्तु जिज्ञासायाः फलं, तदेव मूलं कथमित्याशङ्क्याह॥ अवगतीति॥ आवरणनिवृत्तिरूपाभिव्यक्तिमत्त्वं तत्त्वमवगतिः पर्य्यन्तोऽवधिर्यस्याखण्डसाक्षात्काररूपवृत्तिज्ञानस्य तदेव जिज्ञासायाः कर्म्म, तदेव फलम्। मूलन्त्वापातज्ञानमित्यधुना वक्ष्यत इति फलमूलज्ञानयोर्भेदान्न जिज्ञासानुपपत्तिरित्यर्थः। ननु गमनस्य ग्रामः कर्म्म, तत्प्राप्तिः फलमिति भेदात् कर्म्मैव फलमित्ययुक्तमत आह॥ फलेति॥ क्रियान्तरे तयोर्भेदेऽपि इच्छायाः फलविषयत्वात् कर्म्मैव फलमित्यर्थः। ननु ज्ञानावगत्योरैक्याद्भेदोक्तिरयुक्तेत्यत आह॥ ज्ञानेनेति॥ ज्ञानं वृत्तिः अवगतिस्तत्फलम् इति भेद इति भावः। अवगन्तुमभिव्यञ्जयितुम्। अवगतेः फलत्वं स्फुटयति॥ ब्रह्मेति॥ इच्छाद्योतकं हेतुमाह॥ निःशेषेति॥ बीजमविद्या आदिर्यस्यानर्थस्य तन्नाशकत्वादित्यर्थः। अवयवार्थमुक्त्वा सूत्रवाक्यार्थमाह॥ तस्मादिति॥ अत्र सन्प्रत्ययस्य विचारलक्षकत्वं तव्यप्रत्ययेन सूचयति। अथातःशब्दाभ्यामधिकारिणः साधितत्वात् तेन ब्रह्मज्ञानाय विचारः कर्त्तव्य इत्यर्थः॥ इति तृतीयवर्णकम्॥

प्रथमवर्णके बन्धस्याध्यासत्वोक्त्या विषयादिसिद्धावपि ब्रह्मप्रसिद्ध्यप्रसिद्ध्यो-

सारबीजस्याविद्यानर्थस्य निबर्हणात् तस्माद्ब्रह्म जिज्ञासितव्यम् ॥ तत् पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात् ? यदि प्रसिद्धं, न जिज्ञासितव्यं, अथाप्रसिद्धं, नैव शक्यं जिज्ञासितुमिति ।

उच्यते । अस्ति तावन्नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितं ब्रह्म । ब्रह्मशब्दस्य हि व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोऽर्थाः प्रतीयन्ते, बृहतेर्धातोरर्थानुग-

---

विषयादिसम्भवासम्भवाभ्यां शास्त्रारम्भसन्देहे पूर्वपक्षमाह ॥ तत् पुनरिति ॥ पुनःशब्दो वर्णकान्तरद्योतनार्थः ॥ यदि वेदान्तविचारात् प्रागपि ब्रह्मज्ञानं तर्हि ज्ञाततत्स्वरूपविषयत्वं नास्ति । अज्ञातत्वाभावेन तद्वि प्रसिद्धफलमपि नास्तीति न विचारयितव्यं । अथाज्ञातं केनापि तर्हि तदुद्देशेन विचारं कर्त्तुं न शक्यते, अज्ञातस्योद्देशायोगात् । तथा च ब्रह्मज्ञानाद्वदत्र विचारात्मकशास्त्रेण वेदान्तैश्च प्रतिपादनायोगात् । तत् प्रतिपाद्यस्वरूपं सम्बन्धो नास्तीति ज्ञानानुत्पत्तेः फलमपि नास्तीत्य नारभ्यं शास्त्रमित्यर्थः ॥

आपातप्रसिद्ध्या विषयादिलाभादारम्भणीयमिति सिद्धान्तयति ॥ उच्यत इत्यादिना ॥ प्रसिद्धं तावदित्यर्थः । अस्तित्वस्याप्रकृतत्वेनास्ति-पदस्य प्रसिद्धिपरत्वात् । ननु केन मानेन ब्रह्मणः प्रसिद्धिः । न च "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुत्येति वाच्यम् । ब्रह्मपदस्य लोके सङ्गतिग्रहाभावेन तद्घटितवाक्यस्याबोधकत्वादित्याशङ्क्य ब्रह्मपदव्युत्पत्त्या प्रथमं तस्य निर्गुणस्य सगुणस्य च प्रसिद्धिरित्याह ॥ ब्रह्मशब्दस्य हीति ॥ अस्यार्थः । श्रुतौ सूत्रे ब्रह्मशब्दस्य प्रयोगान्यथानुपपत्त्या कश्चिदर्थोऽस्तीति ज्ञायते, प्रमाणवाक्ये निरर्थकशब्दप्रयोगादर्शनात् । स चार्थो "बृह वृद्धौ" इति व्याकरणाद्विधीयते, "वृद्धिर्विति" स्मरणात् । सा च वृद्धिर्निरवधिकमहत्त्वमिति सङ्कोचकाभावात् श्रुतावनन्तपदेन सह प्रयोगाच्च ज्ञायते । निरवधिकमहत्त्वञ्चान्तवत्त्वादिदोषशून्यत्वं सर्वज्ञत्वादि-

मात्, सर्व्वस्यात्मत्वाच्च ब्रह्मास्तित्वप्रसिद्धिः। सर्व्वो हि आत्मास्तित्वं प्रत्येति, न नाहमस्मीति। यदि हि नात्मास्तित्वप्रसिद्धिः स्यात् सर्व्वो लोको नाहमस्मीति प्रतीयात्। आत्मा च ब्रह्म। यदि तर्हि लोके ब्रह्मात्मत्वेन प्रसिद्धमस्ति ततो ज्ञातमेवेत्यजिज्ञास्यत्वं पुनरापन्नम्। न। तद्विशेषं प्रति विप्रतिपत्तेः। "देहमात्रं चैतन्यविशिष्टमात्मा" इति प्राकृता जना लोकायतिकाश्च प्रतिपन्नाः। "इन्द्रियाण्येव

---

गुणहीनत्वं च न सम्भवति। लोके गुणहीनदोषवतामल्पत्वप्रसिद्धेः। अतो बृंहणाद् ब्रह्मेति व्युत्पत्त्या देशकालवस्तुतः परिच्छेदाभावरूपं नित्यत्वं प्रतीयते। अविद्यादिदोषशून्यत्वं शुद्धत्वम्। जाड्यराहित्यं बुद्धत्वम्। बन्धकालेऽपि स्वतो बन्धाभावो मुक्तत्वञ्च प्रतीयते। एवं सकलदोषशून्यं निर्गुणं प्रसिद्धम्। तथा सर्व्वज्ञत्वादिगुणकञ्च तत्पदवाच्यं प्रसिद्धम्। ज्ञेयस्य कार्य्यस्य चापरिशेषेऽल्पत्वप्रसङ्गेन सर्व्वज्ञत्वस्य सर्व्वकार्य्यशक्तिमत्त्वस्य च लाभादिति। एवं "तत्पदार्थप्रसिद्धेरप्रमाणत्वेन ज्ञातत्वादज्ञानानिवृत्तेः फलाज्जिज्ञासोपपत्तिः" इति उक्त्वा त्वंपदार्थात्मनापि ब्रह्मणः प्रसिद्ध्या तदुपपत्तिरित्याह॥ सर्व्वस्येति॥ सर्व्वस्य लोकस्य योऽयमात्मा तदभेदाद् ब्रह्मणः प्रसिद्धिरित्यर्थः। नन्वात्मनः प्रसिद्धिः केत्यत आह॥ सर्व्वो हीति॥ "अहमस्मीति" न "प्रत्येति" इति, न, किन्तु "प्रत्येत्येव" अतः सच्चिदात्मनः प्रसिद्धिरित्यर्थः।

आत्मनः कुतः सत्त्वेति शून्यमतमाशङ्क्याह॥ यदि हीति॥ आत्मनः शून्यत्वस्य प्रतीतौ "अहं नास्मि" इति लोको जानीयात्। लोकस्तु "अहमस्मि" इति जानाति, तस्मादात्मनोऽस्तित्वप्रसिद्धिरित्यर्थः। आत्मप्रसिद्धावपि ब्रह्मणः किमायातं तत्राह॥ आत्मा चेति॥ "अयमात्मा ब्रह्म" इत्यादिश्रुतेरिति भावः। प्रसिद्धिपक्षोक्तं दोषं पूर्व्वपक्षी स्मारयति॥ यदीति॥ अज्ञातत्वाभावेन विषयाद्यभावादविचार्य्यत्वं प्राप्तमित्यर्थः। यथा "इदं रजतम्" इति वस्तुतः शुक्तिप्रसिद्धिस्तद्वत्

चेतनान्यात्मा" इत्यपरे। "मन" इत्यन्ये। "विज्ञान-मात्र क्षणिक" इत्येके। "शून्य" इत्यपरे। "अस्ति देहादिव्यतिरिक्तः संसारी कर्त्ता भोक्ता" इत्यपरे। "भोक्तैव केवल न कर्त्ता" इत्येके। "अस्ति तद्व्यतिरिक्त ईश्वर सर्वज्ञ सर्वशक्ति" इति केचित्।

आत्मा स भोक्तु" इत्यपरे। एव बहवो विप्रतिपन्ना युक्तिवाक्यतदाभाससमाश्रयाः सन्त। तत्राविचार्य्य यत्

---

"अहमस्मि" इति श्रुत्यनुभवतन्त्रप्रपात् सामान्येन वस्तुतो ब्रह्मणः प्रसिद्धि, नेय पूर्णानन्दब्रह्मत्वरूपविशेषगोचरा, वादिना विवादाभावप्रसङ्गात्। न हि शुक्तित्वविशेषदर्शने सति "रजत रङ्गमन्यद्वा" इति विप्रतिपत्तिरस्ति। अतो विप्रतिपत्त्यन्यथानुपपत्त्या सामान्यत प्रसिद्धावपि विशेषस्याज्ञातत्वाद्विषयादिसिद्धिरिति सिद्धान्तयति॥ नेत्यादिना॥ सामान्यविशेषभाव स्वात्मनि वस्तुत पूर्णादिपदवाच्यभेदात् कल्पित इति मन्तव्य। तत्र स्थूल-सूक्ष्मकर्मेषु विप्रतिपत्तिरुपन्यस्यति। देहमात्रमित्यादिना॥ शास्त्रज्ञानशून्या प्राकृता। वेदबाह्यमतानुक्त्वा तार्किकादिमतमाह॥ अस्तीति॥ सांख्यमतमाह। भोक्तेति॥ किमात्मा देहादिरूप उत तद्भिन्न इति विप्रतिपत्तिकोटित्वेन देहेन्द्रियमनोबुद्धिशून्यान्युक्त्वा तद्भिन्नोऽपि कर्तृ-त्वादिमान्न वेति विप्रतिपत्तिकोटित्वेन तार्किकसांख्यपक्षावुपन्यस्याकर्त्ता-पीश्वराद्भिन्नो न वेति विवादकोटित्वेन योगिमतमाह॥ अस्ति तद्व्यति-रिक्त ईश्वर इति॥ निरतिशयसत्त्व गृहीत्वा ईश्वर सर्वज्ञत्वादि-मन्तम् इति योगिनो वदन्ति।

भेदकोटिमुक्त्वा सिद्धान्तकोटिमाह॥ आत्मा स भोक्तुरिति॥ भो-क्तुर्जीवस्याकर्त्तु साक्षिण स ईश्वर आत्मा स्वरूपमिति वेदान्तिनो वद-न्तीत्यर्थ॥ विप्रतिपत्तीरुपसंहरति॥ एव बहव इति। विप्रतिपत्तीनां प्रपञ्चो निरासश्च विवरणोपन्यासेन दर्शित सुखबोधायेतीहोपरम्यते, तत्र

किञ्चित् प्रतिपद्यमानो निःश्रेयसात् प्रतिहन्येतानर्थञ्चेयात्। तस्मात् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयते॥ १॥

"ब्रह्म जिज्ञासितव्यम्" इत्युक्तम्। किंलक्षणकं पुनस्तद्ब्रह्म? इत्यत आह भगवान् सूत्रकारः।

---

युक्तिवाक्याश्रया सिद्धान्तिनो "जीवो ब्रह्मैव आत्मत्वाद् ब्रह्मवत्" इत्यादि युक्ते, "तत्त्वमसि" इत्यादि श्रुतेश्चाबाधिताया सत्त्वात्। अन्ये तु-देहादिरात्माहंप्रत्ययगोचरत्वाद्व्यतिरेकेण घटादिवदित्यादियुक्त्याभास,'स वा एष पुरुषोऽन्नरसमय" इन्द्रियसंवादे "चक्षुरादय ते ह वाचमूचु, मन उवाच, योऽयं विज्ञानमय, असदेवेदमग्र आसीत्, कर्त्ता भोक्ता, अन्योऽन्तर आत्मानन्दमय" इति वाक्याभासांश्चाश्रिता इति विभाग। "देहादिरनात्मा भौतिकत्वाद् घटवत्" इत्यादिन्यायै "आनन्दमयोऽभ्यासात्" इत्यादिसूत्रैश्चाभासत्वं वक्ष्यते। ननु सन्तु विप्रतिपत्तयस्तथापि यस्य यन्मते श्रद्धा तदाश्रयणात्तस्य स्वार्थसिद्धिरिति किं ब्रह्मविचारारम्भेणेत्यत आह॥ तत्राविचार्येति॥ ब्रह्मात्मैक्यज्ञानादेव मुक्तिरिति वस्तुगतिः। मतान्तराश्रयणे तदभावान्मोक्षासिद्धिः। किञ्चात्मानमन्यथा ज्ञात्वा तत्पापेन संसारान्धकूपे पतेत्॥

"अन्धं तमः प्रविशन्ति ये के चात्महनो जनाः" इति श्रुतेः।

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
किं तेन न कृतं पापं चोरेणात्मापहारिणा"॥

इति वचनाच्चेत्यर्थः। अतः सर्वेषां मुमुक्षूणां निःश्रेयसफलाय वेदान्तविचारः कर्त्तव्य इति सूत्रार्थमुपसंहरति॥ तस्मादिति॥ बन्धस्याध्यस्तत्वेन विद्यादिसाध्याङ्गत्वाद्धिकारिलाभादापातप्रसिद्धा विषयादिसम्भवाच्च वेदान्तविषया मीमांसा पूजिता विचारणा वेदान्ताविरोधिनो ये तर्कास्तन्त्रान्तरस्थास्ते उपकरणानि यस्याः सा निःश्रेयसायारभ्यत इत्यर्थः। ननु कृते विचारे विषयाभावात्तदारम्भ क इति सूत्रार्थं इत्यत आह॥

## जन्माद्यस्य यत इति ॥ २ ॥

जन्मोत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः। जन्मस्थितिभङ्गं समासार्थः। जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च। श्रुतिनिर्देशस्तावत् "यतो वा इमानि भूतानि जायन्ते" इति। अस्मिन् वाक्ये जन्मस्थितिप्रलयानां क्रमदर्शनात्। वस्तुवृत्तमपि, जन्मना लब्धसत्ता-

अस्तीति। ब्रह्मज्ञानेच्छोत्पत्तिद्वारा विचारं लक्षयित्वा तत्कर्तव्यतां ब्रवीतीति भावः। एवं प्रथमसूत्रस्य चत्वारोऽर्था व्याख्यानचतुष्टयेन दर्शिताः। सूत्रस्य चानेकार्थत्वं भूषणम्। ननु इदं सूत्रं शास्त्राद्बहिः स्थित्वा शास्त्रमारम्भयति अन्तर्भूत्वा वा ? आद्ये तस्य हेयता, शास्त्रासम्बन्धात्। द्वितीये तस्यारम्भकं वाच्यम्। न च स्वयमेवारम्भकं स्वस्मात् स्वोत्पत्तेरित्यात्माश्रयात्, न चारम्भकान्तरं पश्याम इति। उच्यते। अत्र स्वविधिना आरब्धमिदं शास्त्रं शास्त्रान्तर्गतमेव शास्त्रारम्भं प्रतिपादयति। यथाऽध्ययनविधिर्वेदान्तर्गत एव कृत्स्नवेदस्याध्ययने प्रयुङ्क्ते तद्वदित्यनवद्यम् ॥ १ ॥ प्रथमसूत्रं समाप्तम् ॥

प्रथमसूत्रेण शास्त्रारम्भमुपपाद्य शास्त्रमारभमाणः पूर्वोत्तराधिकरणयोः सङ्गतिं वक्तुं वृत्तं कीर्तयति ॥ अथेति ॥ मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्युक्तम्। ब्रह्मणो विचार्यत्वोक्त्या अर्थात् प्रमाणादिविचाराणां प्रतिज्ञातत्वेऽपि ब्रह्मप्रमाणं ब्रह्मयुक्तिरित्यादिविशिष्टविचाराणां विशेषेण ब्रह्मज्ञानं विना कर्तुमशक्यत्वात्तत्स्वरूपज्ञानायादौ लक्षणं वक्तव्यं तच्च सम्भवतीत्याक्षिप्य सूत्रकृत् पूजयन्नेव लक्षणसूत्रमवतारयति ॥ किंलक्षणकमिति ॥ किमाक्षेपे, नास्त्येव लक्षणमित्यर्थः। आक्षेपेणास्योत्थानादाक्षेपसङ्गतिः। लक्षणद्योतिवेदान्तानां स्पष्टब्रह्मलिङ्गानां लक्ष्ये ब्रह्मणि समन्वयोक्तेः श्रुतिशास्त्राध्यायपादसङ्गतयः। तथा हि। "यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यं विषयः। तत्किं ब्रह्मणो लक्षणं न वेति सन्देहः। तत्र पूर्वपक्षे ब्रह्मस्वरूपा-

ह्योपादानात्। एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्त ईश्वरकारणिनः। नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे। न। वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननि

---

ये सूत्रोक्ता जन्मादयस्त एवेष्टव्या इत्यर्थः। यदि निरुक्तस्यापि श्रुतिमूलमिति महाभूतजन्मादिकमर्थस्तर्हि सा श्रुतिरेव सूत्रस्य मूलमस्तु किमनुमानेन निरुक्तेनेति भावः। यदि जगतो ब्रह्मातिरिक्तं कारणं स्यात् तदा ब्रह्मलक्षणस्य तत्रातिव्याप्त्यादिदोषः स्यात्, अतस्तन्निरासाय लक्षणसूत्रेण ब्रह्म विना जगज्जन्मादिकं न सम्भवति कारणान्तरासम्भवादिति युक्तिः सूचिता, सा तर्कपादे विस्तरेण वक्ष्यते, अधुना सङ्क्षेपेण तां दर्शयति॥ न यथोक्तेत्यादिना॥ नामरूपाभ्यां व्याकृतस्येत्यादीनां चतुर्णां जगद्विशेषणानां व्याख्यानावसरे प्रधानशून्ययोः संसारिणश्च निरासो दर्शितः। परमाणूनामचेतनानां स्वतः प्रवृत्त्ययोगाज्जीवानां च ज्ञानशून्यत्वनियमेनानुमानात् सर्वज्ञेश्वरासिद्धौ तेषां प्रेरकाभावात् जगदारम्भकत्वासम्भव इति भावः। स्वभावादेव विचित्रं जगदिति लोकायतमतं प्रत्याह॥ न चेति॥ जगत उत्पत्त्यादि सम्भावयितुं न शक्यमित्यन्वयः। किं स्वयमेव स्वस्य हेतुरिति स्वभावः उत कारणानपेक्षत्वं? नाद्यः, आत्माश्रयात्। न द्वितीयमित्याह॥ विशिष्टेति॥ विशिष्टान्यसाधारणानि देशकालनिमित्तानि तैरेव कार्यार्थिभिरुपादीयमानत्वात् कार्यस्य कारणानपेक्षत्वं न युक्तमित्यर्थः। अनपेक्षत्वे धान्यार्थिनां भूविशेषे वर्षादिकाले बीजादिनियमेन प्रवृत्तिर्न स्यादिति भावः। पूर्वोक्तसर्वज्ञत्वादिविशेषणकमीश्वरं विना जगत उत्पत्त्यादिकं न सम्भवतीति भाष्येण कर्तारं विना कार्यं नास्तीति व्यतिरेक उक्तः। तेन "यत् कार्यं तत् सकर्तृकमिति" व्याप्तिः सूच्यते। एतदेव व्याप्तिज्ञानं जगति पक्षे कर्तारं साधयत् सर्वज्ञेश्वर

धिकृतविशेषपरित्यागेन ब्रह्मस्वरूपं प्रदर्शयितुं "न वाचं विजिज्ञासीत वक्तारं विद्यात्" इत्यादिना प्रत्यगात्माभिमुखीकरणार्थमुपदेशो न विरुध्यते। "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादि च श्रुत्यन्तरं वचनादिक्रियाव्याप्तस्यैवात्मनो ब्रह्मत्वं दर्शयति। यत् पुनरेतदुक्तं "सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः" इति प्राणप्रज्ञात्मनोर्भेददर्शनं ब्रह्मवादिनो नोपपद्यत इति। नैष दोषः। ज्ञानक्रियाशक्तिद्वयाश्रययोर्बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूतयोर्भेदनिर्देशोपपत्तेः। उपाधिद्वयोपहितस्य तु प्रत्यगात्मनः स्वरूपेणाभेद इत्यतः प्राण एव प्रज्ञात्मेत्येकीकरणमविरुद्धम्। अथवा नोपासात्रैविध्यादाश्रितत्वादिह तद्योगादित्यस्यायमन्योऽर्थः। न ब्रह्मवाक्ये ऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते। कथम्। उपासात्रैविध्यात्। त्रिविधमिह ब्रह्मोपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण च। तत्र "आयुरमृतमित्युपास्वायुः प्राणः" इति "इदं शरीरं परिगृह्योत्थापयति" "त-

लोकसिद्धत्वात्, किन्तु तस्य ब्रह्मत्वं बोध्यते तद्बोधाभिमुख्याय जिज्ञादय इत्यत श्रुत्यन्तरमाह॥ यद्वा चेति॥ येन चैतन्येन वागभ्युद्यते स्वकार्याभिमुख्येन प्रेर्यते तदेव वागादेरगम्यं ब्रह्मेत्यर्थः। तत्पक्ष्यदवाच्ययोः स्वरूपतो भेदस्तथाप्युपलक्ष्यात्मस्वरूपाभेदादैकत्वं निर्दिश्यत इत्याह॥ नैष दोष इति॥ स्वमतेन सूत्रं व्याख्याय वृत्तिकृन्मतेन व्याचष्टे॥ अथवेति॥ उपासनात्रित्वप्रसङ्गादिति पूर्वसूत्रम्। अत्र त्रिप्रकारकस्यैकब्रह्मविषयकस्यैकस्योपासनस्य विवक्षितत्वादित्यर्थः। अतो न वाक्यभेद इति भावः। देहे चैतन्यजीवनहेतुत्वं प्राणस्यायुः देहापेक्षया तस्यान्-

स्मादेतदेवोक्थमुपासीत" इति च प्राणधर्मः। अथ "यथास्यै प्रज्ञायै सर्वाणि भूतानि एकीभवन्ति तत् व्याख्यास्यामः" इत्युपक्रम्य "वागेवास्या एकमङ्गमदूदुहत् तस्यै नाम च परस्तात् प्रतिविहिता भूतमात्रा प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति" इत्यादि प्रज्ञाधर्मः। "ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यदि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युः। यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः न ह्यन्यतरतो रूपं किञ्चन सिध्येत्, नो वा एत-

---

तुक्तेरवस्थानादमृतत्वमुत्थापयतीत्युक्थत्वमिति प्राणधर्म्मः। जीवधर्मा-नाह॥ अथेति॥ बुद्धिप्राणयोः सहस्थित्युत्क्रान्त्युक्त्यनन्तरमित्यर्थः। अत्र प्रज्ञापदेन साभासा जीवाख्या बुद्धिरुच्यते। तस्याः सम्बन्धीनि दृश्यानि सर्वाणि भूतानि यथैकं भवन्त्यधिष्ठानचिदात्मना तथा व्याख्यास्याम इत्युपक्रम्योक्तं वागेवेत्यादि चक्षुरेवास्या एकमङ्गमदूदुहदित्यादि-पर्य्यायाणां सङ्क्षिप्तार्थ उच्यते। उक्तप्रज्ञाया अस्मत्कल्पाया साभासबुद्धे-र्नामप्रपञ्चविषयित्वमर्द्धशरीरम्, अर्थात्मकरूपप्रपञ्चविषयित्वमर्द्धशरीर-मिति मिलित्वा विषयित्वाख्यं पूर्णं शरीरमिन्द्रियसाध्यम्। तत्र कर्म्मे-न्द्रियेषु वागेवास्याः प्रज्ञाया एकमङ्गं देहार्द्धमदूदुहत् पूरयामास वागिन्द्रियद्वारा नामप्रपञ्चविषयित्वं बुद्धिर्लभत इत्यर्थः। चतुर्थी षष्ठ्यर्था। तस्याः पुनर्नाम किल चक्षुरादिना प्रतिविहिता स्थापिता भूतमात्रा रूपाद्यर्थरूपा परस्तादुपरात् कारणं भवति ज्ञानकरणद्वाराऽर्थप्रपञ्च-विषयित्वं बुद्धिः प्राप्नोतीत्यर्थः। एवं बुद्धेः सर्वार्थद्रष्टृत्वमुपपाद्य तन्निष्ठ-चित्प्रतिबिम्बद्वारा साक्षिणि द्रष्टृत्वाध्यासमाह॥ प्रज्ञयेति॥ बुद्धिद्वारा चिदात्मा वागिन्द्रियं समारुह्य तस्याः प्रेरको भूत्वा वाचा करणेन सर्वाणि नामानि वक्तृत्वेनाप्नोति, चक्षुषा सर्वाणि रूपाणि पश्य-तीत्येवं द्रष्टा भवतीत्यर्थः। तथा च सर्वद्रष्टृत्वं चिदात्मनि द्रष्टृत्वाध्या-सनिमित्तञ्च बुद्धेर्धर्म्म इत्युक्तं भवति सर्वाधारत्वानन्दत्वादिब्रह्मधर्म्मा इत्याह॥ ता वा इति॥ दशात्र व्याख्यातं प्रज्ञा इन्द्रियजा ता

त्मानां तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा" इत्यादि ब्रह्मधर्मः। तस्मात् ब्रह्मण एवैतदुपाधिद्वयधर्मेण स्वधर्मेण चैकमुपासनं त्रिविधं विवक्षितम्। अन्यत्रापि मनोमयः प्राणशरीर इत्यादावुपाधिधर्मेण ब्रह्मण उपासनमाश्रितम्, इहापि तद्युज्यते वाक्यस्योपक्रमोपसंहाराभ्यामेकार्थत्वावगमात् प्राणप्रज्ञाब्रह्मलिङ्गावगमाच्च। तस्माद्ब्रह्म

अधिकृत्य ग्राह्यभूतमात्रा वर्त्तन्ते प्रज्ञामात्रा इन्द्रियाणि ग्राह्यं भूतजातमधिकृत्य वर्त्तन्त इति ग्राह्यग्राहकयोर्मिथः सापेक्षत्वमुक्तं साधयति॥ यदिति॥ तदेव स्फुटयति॥ न ह्रीति॥ ग्राह्येण ग्राह्यस्वरूपं न सिद्ध्यति किन्तु ग्राहकेण। एवं ग्राहकमपि ग्राह्यमनपेक्ष्य न सिद्ध्यति, तस्मात् सापेक्षत्वादेतद् ग्राह्यग्राहकद्वयं वस्तुतो न भिन्नं किन्तु चिद्रूपे अध्यारोपितमित्याह॥ नो इति॥ तद्यथेत्यादि व्याख्यानम्। सूत्रार्थमुपसंहरति॥ तस्मादिति॥ अन्यधर्मेण ब्रह्मोपासनं कथमित्याशङ्क्याऽऽश्रितत्वादित्याह॥ अन्यत्रापीति॥ उपाधिभिर्जीव। अन्यधर्मेणोपासनमियमसङ्गता वाच्या, तथा हि न तावदारब्धाद्यनेकगुणविशिष्टप्राणक्रियार्थवत्, उपास्त्यर्थविशिष्टस्य ब्रह्मणो विधिः सम्भवति सिद्धस्य विध्यनर्हत्वात्, नापि ब्रह्मानुवादेनोपास्त्यर्थविधिः वाक्यभेदात्, न च नानाधर्मविशिष्टमेकमुपासनं विधीयत इति वाच्यं, वाक्यविधिवाक्यस्यात्राश्रवणात्, न च तमायुरमृतमित्युपास्वेति, अत मामिति जीवेनायुरिति प्राणेनामृतमिति ब्रह्मणा स्वस्वधर्मवता विशिष्टोपासनाविधिरिति वाच्यं, सर्वेषां धर्माणामश्रवणाद् ब्रह्मास्तुतेश्च। प्राणो वा अमृतमिति प्राणस्यैवामृतत्वश्रुते। अत उपासनाविधित्वेन वक्तारं विद्यात्, एतदेवोक्थमुपासीत स मे आत्मेति विद्यादिति जीवप्राणब्रह्मोपासनविधयः, अन्ये गुणविधय इति लौकिकमेकवाक्यत्वं त्याज्यं तत्रायुक्तमुपक्रमादिनैकवाक्यतानिर्णयात्। तस्मात् श्रेयः प्रत्यक्ब्रह्मपरमिदं वाक्यमित्युपसंहरति॥ तस्मादिति॥ इति श्रीमत्परमहंस-

वाक्यमेतदिति सिद्धम्॥ इति श्रीमच्छारीरकमीमांसाभाष्ये शङ्करभगवत्पूज्यपादकृतौ प्रथमाध्यायस्य प्रथमः पादः॥

नमः परमात्मने। प्रथमे पादे जन्माद्यस्य यत इत्याकाशादेः समस्तस्य जगतो जन्मादिकारणं ब्रह्मेत्युक्तं। तस्य समस्तजगत्कारणस्य ब्रह्मणो व्यापित्व नित्यत्व सर्व्वज्ञत्वं सर्व्वात्मकत्वमित्येवजातीयको धर्म्म उक्त एव भवति। अर्थान्तरप्रसिद्धानां केषाञ्चिच्छब्दानां ब्रह्मविषयत्वे हेतुप्रतिपादनेन कानिचिद्वाक्यानि सन्दिह्यमानानि ब्रह्मपरतया निर्णीतानि। पुनरप्यन्यानि वाक्यानि अस्पष्टब्रह्मलिङ्गानि सन्दिह्यन्ते किं परं ब्रह्म प्रतिपादयन्ति, आहोस्विदर्थान्तरं किञ्चिदिति। तन्निर्णयाय द्वितीयतृतीयौ पादावारभ्येते।

## सर्व्वत्र प्रसिद्धोपदेशात्॥ १॥

इदमाम्नायते। "सर्व्वं खल्विदं ब्रह्म तज्जलानिति" शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके

परिव्राजकाचार्य्य श्रीगोविन्दानन्दभगवत् पादकृतौ श्रीमच्छारीरकमीमांसा व्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य प्रथमः पादः॥

नमः परमात्मने।

श्रीराम सिद्धमसारं गुहाशयिनमन्तरम्।
अन्तर्यामिनमत्तारं वैश्वानरमहं भजे॥

पूर्वपादेनोत्तरपादयोः सङ्गतिं वक्तुं वृत्तमनुवदति॥ प्रथम इति॥ जगत्कारणोक्त्या व्यापित्वादिकमर्थात् सिद्धम्। तदुपजीव्योत्तर पादद्वय प्रवर्त्तत इति हेतुहेतुमद्भाव सङ्गतिः। अथ पादभेदं वक्तुमाद्यपादानां प्रमेयभेदमाह॥ अर्थान्तरेति॥ आकाशादिशब्दानां स्पष्टब्रह्मलिङ्गैर्-

पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्व्वीत। मनोमयः प्राणशरीरः" इत्यादि। तत्र संशयः। किमिह मनोमयत्वादिभिर्धर्म्मैः शारीर आत्मोपास्यत्वेनोपदिश्यते, आहोस्वित् परं ब्रह्मेति। किं तावत् प्राप्तं, शारीर इति कुतः। तस्य हि कार्य्यकरणाधिपतेः प्रसिद्धो मन आदिभिः सम्बन्धो, न तु परस्य ब्रह्मण, "अप्राणो ह्यमनाः शुभ्र" इत्यादिश्रुतिभ्यः। ननु "सर्व्वं खल्विदं ब्रह्म" इति स्वशब्देनैव ब्रह्मोपात्तं, कथमिह शारीर आत्मोपास्य इत्याशङ्क्यते। नैष दोषः। नेदं वाक्यं ब्रह्मोपासनाविधिपरं। किं तर्हि। शमविधिपरं। यत् कारणं सर्व्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेत्याह। एतदुक्तं भवति। यस्मात् सर्व्वमिदं विकारजातं ब्रह्मैव, तज्जत्वात्तल्लत्वात्तदनत्वाच्च। न च सर्व्वस्यैकात्मत्वे रागादयः सम्भवन्ति, तस्माच्छान्त उपासीतेति। न च शमविधिपरत्वे सत्यनेन वाक्येन ब्रह्मोपासनं नियन्तुं शक्यते, उपासनन्तु सक्रतु

ह्मणि समन्वयो दर्शितः। अस्पष्टब्रह्मलिङ्गवाक्यसमन्वयः पादद्वये वक्ष्यते। प्रायेणोपास्यज्ञेयब्रह्मभेदात् पादयोरवान्तरभेद इति भावः। छान्दोग्यमुदाहरति॥ इदमिति॥ तस्माज्जायत इति तज्जं, तस्मिन् लीयत इति तल्लं, तस्मिन्ननिति चेष्टत इति तदनं तज्जञ्च तल्लञ्च तदनञ्चेति, तज्जलान् कर्म्मधारयेऽस्मिन् शाकपार्थिवन्यायेन मध्यपदस्य तच्छब्दस्य लोपः, तज्जलानमिति वाच्ये छान्दसोऽवयवलोपः, इतिशब्दो हेतौ। सर्व्वमिदं जगद्ब्रह्मैव तद्विवर्त्तत्वादित्यर्थः। ब्रह्मणि मित्रामित्रभेदाभावाच्छान्तो रागादिरहितो भवेदिति गुणविधिः। स क्रतुमुपासनं कुर्व्वीतेति विहितोपासनस्योपासीतेत्यनुवादात् फलमाह॥ कथेति॥ क्रतुमयः सङ्कल्पविकार इत्यर्थः। पुरुषस्य ध्यानविकारत्वं स्फुटयति॥

कुर्वीतेत्यनेन विधीयते । क्रतुः सङ्कल्पो ध्यानमित्यर्थः । तस्य ध्यानस्य च विषयत्वेन श्रूयते "मनोमयः प्राणशरीरः" इति जीवलिङ्गम् । अतो ब्रूमो जीवविषयमेतदुपासनमिति । "सर्वकर्मा सर्वकामः" इत्याद्यपि श्रूयमाणं पर्यायेण जीवविषयमुपपद्यते । "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा" इति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य जीवस्यावकल्पते, नापरिच्छिन्नस्य ब्रह्मणः । ननु "ज्यायान् पृथिव्याः" इत्याद्यपि न परिच्छिन्नेऽवकल्पत, इति अत्र ब्रूमः, न तावदणीयस्त्वज्यायस्त्वे उभयमेकस्मिन् समाश्रयितुं शक्यं, विरोधात् अन्यतराश्रयणे च अणीयस्त्वस्य प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयितुं । ज्यायस्त्वं तु ब्रह्मभावापेक्षया भविष्यति । निश्चिते च जीवविषयत्वे यदन्ते ब्रह्मसंकीर्त्तनमेतद् ब्रह्मेति, तदपि प्रकृतपरामर्शार्थत्वाज्जीवविषयमेव । तस्मान्मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इत्येवं प्राप्ते ब्रूमः, परमेव ब्रह्मेह मनोमयत्वादिभिर्धर्मैरुपास्यं । कुतः । सर्वत्र प्रसिद्धोपदेशात् । यत्

अश्नुते ॥ इह यथाक्रतुरिति कृत्वा ध्यानमहिम्ना तद्ध्येयरूपेण जायत इत्यर्थः ॥ क्रतुमयः सङ्कल्पप्रधान इति वाऽर्थः । क्रतोर्विषयमाह ॥ मन इति ॥ ब्रह्मोपक्रमान्मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः अन्तर्हृदये ध्येयमित्यर्थः । पूर्वत्र ब्रह्मलिङ्गैरब्रह्मलिङ्गबाध उक्तः, न तथेहोपक्रमे ब्रह्मणो लिङ्गमस्ति, किन्तु प्रकरणम् । तच्च शान्तिगुणविधानार्थमन्यथासिद्धम् । अतो जीवलिङ्गं बलीय इति प्रत्युदाहरणेन पूर्वपक्षयति ॥ शारीर इत्यादिना ॥ श्रुतिबाधशङ्कामन्यथासिद्ध्या परिहरति ॥ नैष दोष इति ॥ धर्मविधिपरत्वे हेतुमाह ॥ यत् कारणमिति ॥ यत एवमाह तस्माद्धर्मविधिपरमित्यन्वयः । अन्ते ब्रह्म प्रकृतब्रह्मपरामर्शार्थं, न तु जगत् परामर्शार्थं, जगद्विशेषणे प्रयोजनाभावात् । अत्र प्रयोजना

सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणमिह च सर्वं खल्विदं ब्रह्मेति वाक्योपक्रमे श्रुतं, तदेव मनोमयत्वादिधर्मैर्विशिष्टमुपदिश्यत इति युक्तम्। एवञ्च प्रकृतहानाप्रकृतप्रक्रिये न भविष्यतः। ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्द्दिष्टं, न स्वविवक्षया, इत्युक्तम्। अत्रोच्यते। यद्यपि शमविधिविवक्षया ब्रह्म निर्दिष्टं, तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव सन्निहितं भवति। जीवस्तु न सन्निहितो, न च स्वशब्देनोपात्त इति वैषम्यम्॥

---

भावेऽपि यत्र प्रयोजनं तत्र भवत्येव जगद्विशेषणं यथात्मैवेदं सर्व्वम्। अत्र बाधाया समानाधिकरणादार्थं विशेषणमावश्यकं तद्वाक्यस्य ज्ञेयब्रह्मविषयत्वात्। अत्र तूपासनाया बाधानावश्यकत्वाद् विषयाभेदेन ब्रह्मण उपास्यतेति॥ न च शमेति॥ शमध्यानयोर्विधौ वाक्यभेदापत्तेरित्यर्थः। जन्मपरम्परया जीवस्यापि सर्व्वकर्म्मत्वादिसम्भवमाह॥ सर्व्वकर्म्मेति। सर्व्वाणि कर्म्माणि यस्य सर्व्वे कामा भोग्या यस्य सर्व्वगन्धः सर्व्वरस इत्यादि शब्दार्थः॥ आराग्रमात्रस्येति॥ नेत्रप्रोतशलाकाग्रपरिमाणस्येत्यर्थः॥ सर्व्वत्र प्रसिद्धब्रह्मण एवात्रोपास्यत्वोपदेशान्न जीव उपास्य इति सूत्रार्थमाह॥ सर्व्वत्रेति॥ यत्र फलं नोच्यते तत्र पूर्व्वोत्तरपक्षसिद्धिः फलमिति मन्तव्यम्। यद्यपि निराकाङ्क्षं ब्रह्म तथापि मनःप्रभुरसुपाधिरस्य प्राणः शरीरमस्येति इत्तार्थविबोधकवाक्यान्तर्गतसर्व्वनाम्न इत्यर्थः। समासान्तर्गतसर्व्वनाम्नः सन्निहितविशेष्याकाङ्क्षत्वाद् ब्रह्म सम्बध्यते। "सोऽमन्ते सदनं करोमि" इति सम्भारार्थसदनस्य निराकाङ्क्षस्यापि तस्मिन् सीदेतिसाकाङ्क्षतच्छब्देन परामर्शदर्शनादित्याह॥ अत्रोच्यत इति॥ स्योनं पात्रं ते पुरोडाशस्येति श्रुत्यर्थः। जीवेऽपिलिङ्गात् सन्निहित इत्यत आह॥ जीवस्त्विति॥ इदं लिङ्गं लोकसिद्धं जीवं न सन्निधापयति। तुच्छेन उपास्ययोग्यत्वात् फलाभावाच्च, अतो विश्वजिन्न्यायेन सर्व्वाभिलषितमानन्दरूपं ब्रह्मैवोपासनाक्रियानुबध्नातीति भावः, किञ्च ब्रह्मपदश्रुत्या लिङ्गबाध इत्याह॥ न चेति॥ अन्यतराव-

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्तुमिष्टा विवक्षिताः। यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः सम्भवति, तथाप्युपादानेन फलेनोपचर्यते। लोके हि यच्छब्दाभिहितमुपादेयं भवति, तद्विवक्षितमित्युच्यते, यदनुपादेयं तदविवक्षितमिति, तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं विवक्षितं भवतीतरदविवक्षितम्। उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते। तदिह ये विवक्षिता गुणा उपासनायामुपादेयत्वेनोपदिष्टाः सत्यसङ्कल्पप्रभृतयः, ते परस्मिन् ब्रह्मण्युपपद्यन्ते। सत्यसङ्कल्पत्वं हि सृष्टिस्थितिसंहारेष्वप्रतिबन्धशक्तित्वात्, परमात्मनोऽवकल्पते। परमात्मगुणत्वेन च "य आत्माऽपहतपाप्मा" इत्यत्र "सत्यकामः सत्यसङ्कल्पः" इति श्रुतम्, "आकाशात्मा" इत्यादिनाऽऽकाशवदात्माऽस्येत्यर्थः। सर्वगतत्वादिभिर्धर्मैः सम्भवत्याकाशेन साम्यं ब्रह्मणः। "ज्यायान् पृथिव्याः" इत्यादिना चैतदेव दर्शयति। यदप्याकाश आत्माऽस्य इति व्याख्यायते, तदपि सम्भवति, सर्वजगत्कारणस्य सर्वात्मनो ब्रह्मण आकाशात्मत्वम्, तएव सर्वकर्मेत्यादि। एवमिहोपास्यतया विवक्षिता गुणा ब्रह्मण्युपपद्यन्ते। यत्तूक्तं "मनो

ज्ञानुगृहीतं फलवत् प्रकरणं विफललिङ्गाद्बलीय इति समुदायार्थः। वस्तुनो विवक्षाया फलमुपादानं स्वीकारः स च प्रकृतेषु गुणेष्वस्तीति विवक्षोपचार इत्याह॥ तथाप्युपादानेनेति॥ नन्विदं ग्राह्यमिदं त्याज्यमिति धीर्विवक्षाधीना वेदे कुतः स्यादित्यत आह। उपादानानुपादाने इति॥ तात्पर्यं नाम फलवदर्थप्रतीत्यनुकूलत्वं शब्दधर्मः। उपक्रमा-

मय प्राणशरीरः" इति जीवलिङ्गं, न तद्ब्रह्मण्युपपद्यत इति, तदपि ब्रह्मण्युपपद्यत इति ब्रूमः। सर्वात्मत्वाद्धि ब्रह्मणो जीवसम्बन्धीनि मनोमयत्वादीनि ब्रह्मसम्बन्धीनि भवन्ति। तथाच ब्रह्मविषये श्रुतिस्मृती भवतः, "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः" इति। "सर्वतः पाणिपादन्तत् सर्वतोऽक्षिशिरोमुखम्। सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति" इति च। "अप्राणो ह्यमनाः शुभ्रः" इति च श्रुतिः शुद्धब्रह्मविषया। इयन्तु श्रुतिः मनोमयः प्राणशरीर इति सगुणब्रह्मविषयेति विशेषः। अतो विवक्षितगुणोपपत्तेः परमेव ब्रह्मेहोपास्यत्वेनोपदिष्टमिति गम्यते।

## अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

पूर्वेण सूत्रेण ब्रह्मणि विवक्षितानां गुणानामुपपत्तिरुक्ता अनेन शारीरे तेषामनुपपत्तिरुच्यते। तुशब्दोऽवधारणार्थः। ब्रह्मैवोक्तेन न्यायेन मनोमयत्वादिगुणं, न तु शारीरो जीवो

दिना तस्य ज्ञानात्तयोरवगम इत्यर्थः ॥ तदिहेति ॥ तत् तस्मात् तान पर्य्यवस्त्वादित्यर्थः। सर्व्वात्मत्वे प्रमाणमाह ॥ तथा चेति ॥ जीर्णः स्थविरो यो दण्डेन वञ्चति गच्छति सोऽपि त्वमेव यो जातो बालः स त्वमेव सर्व्वतः सर्व्वासु दिक्षु श्रुतयः श्रोत्राण्यस्येति सर्व्वतःश्रुतिमत् सर्वजन्तूनां प्रसिद्धाः पाण्यादयस्तस्येति सर्व्वात्मत्वोक्तिः। ननु जीवधर्म्माश्चेद्ब्रह्मणि योज्यन्ते तर्हि ब्रह्मधर्म्मा एव जीवे किमिति न योज्यन्ते। तत्राह ॥ अनुपपत्तेरिति ॥ सूत्रं व्याचष्टे ॥ पूर्व्वेणेति ॥ सर्व्वात्मत्वादिव्यक्तन्याय। कल्पितस्य धर्म्मा अधिष्ठाने सम्बध्यन्ते, न अधिष्ठानधर्मा कल्पिते इति भावः, अधिष्ठानज्ञानकाले कल्पितधर्म्माभावात्। वागेव वाक्, सोऽस्यास्तीति वाकी। नवाकी अवाकी अनिन्द्रिय इत्यर्थः।

मनोमयत्वादिगुणाः, यत्कारणं सत्यसंकल्प आकाशात्माऽवाक्यनादर इत्यादयो ज्यायान् पृथिव्या इति चैवञ्जातीयका गुणा न शारीरे आञ्जस्येनोपपद्यन्ते। शारीर इति शरीरे भव इत्यर्थः। नन्वीश्वरोऽपि शरीरे भवति। सत्यं शरीरे भवति, न तु शरीर एव भवति। ज्यायान् पृथिव्या ज्यायानन्तरिक्षादाकाशवत् सर्व्वगतश्च नित्य इति च व्यापित्वश्रवणात्। जीवस्तु शरीर एव भवति। तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्।

## कर्म्मकर्तृव्यपदेशाच्च ॥ ४ ॥

इतश्च न शारीरो मनोमयत्वादिगुणः, यस्मात् कर्म्मकर्तृव्यपदेशो भवति "एतमितः प्रेत्याभिसम्भवितास्मि" इति। एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्म्मत्वेन प्राप्यत्वेन व्यपदिशति। अभिसम्भवितास्मीति शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन। अभिसम्भवितास्मीति प्राप्तास्मीत्यर्थः। न च सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः, तथोपास्योपासकभावोऽपि भेदाधिष्ठान एव तस्मादपि न शारीरो मनोमयत्वादिविशिष्टः।

कुत्राप्यादरः कामोऽस्य नास्तीत्यनादरः नित्यतृप्त इत्यर्थः। ज्यायस्त्वाद्यनुपपत्तौ शारीर इति परिच्छेदो हेतुरुक्तः। स तु जीवस्यैव नेश्वरस्येत्याह॥ सत्यमित्यादिना॥ प्रापकत्वेन व्यपदिशतीति सम्बन्धः। कर्म्मकर्तृव्यपदेशपदस्यार्थान्तरमाह॥ तथोपास्येति॥ एकार्थत्वं प्रकरणस्य समानत्वम्। अन्तरात्मन्निति विभक्तिश्चोपमध्यान्दस शब्दयोर्विशेषो विभक्तिभेदः। तस्मात्तदर्थयोर्भेद इति सूत्रार्थः। स्मृतौ हृदिस्थस्य जीवाद्भेदोक्तेरत्रापि हृदिस्थो मनोमय ईश्वर इत्याह॥ स्मृतेश्चेति।

शब्दविशेषात् ॥ ५ ॥

इतश्च शारीरादन्यो मनोमयत्वादिगुणः, यस्माच्छब्दविशेषो भवति, समानप्रकरणे श्रुत्यन्तरे "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मयः" इति शारीरस्यात्मनोऽन्यः शब्दोऽभिधायकः सप्तम्यन्तोऽन्तरात्मन्निति। तस्माद्विशिष्टोऽन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः, तस्मात्तयोर्भेदोऽधिगम्यते।

स्मृतेश्च ॥ ६ ॥

स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति "ईश्वरः सर्व्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया" इत्याद्या। अत्राह। कः पुनरयं शारीरो नाम परमात्मनोऽन्यो यः प्रतिषिध्यते, अनुपपत्तेस्तु न शारीर इत्यादिना। श्रुतिस्तु "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्येवञ्जातीयिका परमात्मनोऽन्यमात्मानं वारयति। तथा स्मृतिरपि "क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत" इत्येवञ्जातीयिकेति। अत्रोच्यते। सत्यमेवैतत्, पर एवात्मा देहेन्द्रियमनोबुद्ध्युपाधिभिः परिच्छिद्यमानो बालैः शारीर इत्युपचर्य्यते। यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत्। तदपेक्षया च कर्मत्वकर्तृत्वादिभेदव्यवहारो न विरुध्यते, प्राक् 'तत्त्वमसि' इत्यात्मैकत्वोपदेशग्रहणात्।

---

भूतानि जीवान् यन्त्रं शरीरम्। अत्र सूत्रकृता सत्यभेद उक्त इति भ्रान्तिनिरासायैक्षत्यधिकरणे निरस्तमपि चोद्यमुद्भाव्य निरस्यति॥ अत्राहेत्यादिना॥ त्वदुक्तरीत्या वस्तुत एकत्वमेव भेदस्तु कल्पित, इत्ये-

गृहीते त्वात्मैकत्वबन्धमोक्षादिसर्व्व-व्यवहार-परिसमाप्तिरेव स्यात् ॥

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥**

अर्भकमल्पमोको नीडं, एष मे आत्मान्तर्हृदय इति परिच्छिन्नायतनत्वात् । स्वशब्देन चाणीयान् व्रीहेर्वा यवाद्वेत्यणीयस्त्वव्यपदेशात्, शारीर एवाराग्रमात्रो जीव इहोपदिश्यते न सर्व्वगतः परमात्मेति यदुक्तं, तत्परिहर्त्तव्यं, अत्रोच्यते । नायं दोषः । न तावत् परिच्छिन्नदेशस्य सर्व्वगतत्वव्यपदेशः कथमप्युपपद्यते, सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात् परिच्छिन्नदेशत्वव्यपदेशोऽपि कयाचिदपेक्षया सम्भवति, यथा समस्तवसुधाधिपतिरपि हि सन्नयोध्याधिपतिरिति व्यपदिश्यते । कया पुनरपेक्षया सर्वगतः सन्नीश्वरोऽर्भकौका अणीयांश्च व्यपदिश्यत इति । निचाय्यत्वादेवमिति ब्रूमः । स एवमणीयस्त्वादिगुणगणोपेत ईश्वरस्तत्र हृदयपुण्डरीके निचाय्यो द्रष्टव्य उपदिश्यते, यथा शालग्रामे हरिस्तत्रास्य बुद्धिविज्ञानं ग्राहकम् ।

---

स्मर्य्यत इत्याह ॥ सत्यमिति ॥ अर्भकमोको यस्य सोऽर्भकौकास्तस्य भावस्तत्त्वं तस्मादार्थिकमल्पत्वम् अणीयानित्यल्पत्ववाचकशब्देनापि श्रुतमित्याह ॥ स्वशब्देनेति ॥ नायं दोष इत्यत्र विवृणोति ॥ न तावदिति ॥ कथमपि ब्रह्मभावापेक्षयाऽपीत्यर्थः । परिच्छेदत्यागं विना ब्रह्मत्वासम्भवात् तत्त्यागे च ब्रह्मैव एवोपास्यत्वमायातीति भावः । विभोः परिच्छेदोक्तौ दृष्टान्तमाह ॥ यथा समस्तेति ॥ सर्व्वेश्वरस्यायोध्यायां स्थित्यपेक्षापरिच्छेदोक्तिवदत्रापि हृदि ध्येयत्वेन तथोक्तिरित्यर्थः । ननु किमिति हृदयमेव मायेणोच्यते तत्राह ॥ तत्रेति ॥ हृदये परमात्मनो

सर्वगतोऽपीश्वरस्तत्रोपास्यमानः प्रसीदति। व्योमवच्चैतद् द्रष्टव्यम्। यथा सर्वगतमपि सद् व्योम सूचीपाशाद्यपेक्षयाऽर्भकौकोऽणीयश्च व्यपदिश्यते एवं ब्रह्मापि। तदेव निचाय्यत्वापेक्षं ब्रह्मणोऽर्भकौकस्त्वमणीयस्त्वञ्च न पारमार्थिकम्। तत्र यदाशङ्क्यते, हृदयायतनत्वाद् ब्रह्मणो हृदयायतनानाञ्च प्रतिशरीरभिन्नत्वाद्, भिन्नायतनानाञ्च शुकादीनामनेकत्वसावयवत्वाऽनित्यत्वादिदोषदर्शनाद् ब्रह्मणोऽपि तद्वत् प्रसङ्ग इति, तदपि परिहृतं भवति।

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्॥ ८॥

व्योमवत् सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसम्बन्धाच्चिद्रूपतया च शारीरेणाविशिष्टत्वात् सुखदुःखादिसम्भोगोऽप्यविशिष्टः प्रसज्येत। एकत्वाच्च। न हि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते "नान्योऽतोऽस्ति विज्ञाता" इत्यादिश्रुतिभ्यः। तस्मात् परस्यैव संसारसम्भोगप्राप्तिरिति चेत्। न। वैशेष्यात्। न तावत् सर्वप्राणिहृदयसम्बन्धाच्छारीरवद् ब्रह्मणः

बुद्धिरत्रार्पिहिता भवति। अत ईश्वराभिव्यक्तिस्थानत्वात्तदुक्तिरित्यर्थः। व्योमदृष्टान्ताभिना शङ्कान्तरमपि कश्चित् छिन्नत्येह॥ तत्र यदाशङ्क्यत इत्यादिना॥ भिन्नायतनत्वेऽपि व्योम्न स्वत्वभेदाद्यभावादिति भावः। ब्रह्मणो हार्दत्वेऽनिष्टसम्भोगापत्तेर्जीव एव हार्द उपास्य इति शङ्कां व्याचष्टे॥ व्योमवदिति॥ ब्रह्म भोक्तृ स्यात् हार्दत्वे सति चेतनत्वाज्जीवाभिन्नत्वाच्च जीववदित्युक्तं निरस्यति॥ न वैशेष्यादिति॥ धर्माधर्मवत्त्वमुपाधिरित्यर्थः। अयमेव विशेषो वैशेष्यं स्वार्थे ष्यञ्।

सम्भोगप्रसङ्गो वैशेष्यात्। विशेषो हि भवति शारीरपरमेश्वरयोरेकः कर्त्ता भोक्ता धर्म्माधर्मसाधनः सुखदुःखादिमांश्च, एकस्तद्विपरीतोऽपहतपाप्मत्वादिगुणः। एतस्मादनयोर्विशेषादेकस्य भोगो, नेतरस्य। यदि च सन्निधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्य्यसम्बन्धोऽभ्युपगम्येत, आकाशादीनामपि दाहादिप्रसङ्गः। सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ। यदप्येकत्वात् ब्रह्मण आत्मान्तराभावात् शारीरस्य भोगेन ब्रह्मणो भोगप्रसङ्ग इति अत्र वदाम इदं तावद्देवानांप्रियः प्रष्टव्यः, कथमयं त्वया आत्मान्तराभावोऽध्यवसित इति। "तत्वमस्यहं ब्रह्मास्मि नान्योऽतोऽस्ति विज्ञातेत्यादि शास्त्रेभ्य इति चेत्, यथाशास्त्रं तर्हि शास्त्रीयोऽर्थः प्रतिपत्तव्यो न तत्रार्द्धजरतीयं लभ्यम्। शास्त्रञ्च तत्त्वमसीत्यपहतपाप्मत्वादिविशेषणं ब्रह्मशारीरस्यात्मत्वेनोपदिशत् शारीरस्यैव तावदुपभोक्तृत्वं वारयति। कुतः तदुपभोगेन ब्रह्मण उपभोगप्रसङ्गः। अथागृहीतं शारीरस्य ब्रह्मणैकत्वं, तदा मिथ्याज्ञाननिमित्तः शारीरस्योपभोगो न तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शः। न हि बालैस्तलमलिनतादिभिर्व्योम्नि विकल्प्यमाने तलमलिनता-

---

विशेषस्यातिशयार्थो वा धर्म्मादेः स्वाश्रये फलहेतुत्वमतिशयः, तस्मादिति सूत्रार्थः। किञ्च विभवो बहव आत्मान इतिवादिनामेकस्मिन् देहे सर्वात्मना भोक्तृत्वप्रसङ्गः स्वकर्म्मार्जित एव देहे भोग इति परिहारश्च तुल्य इति न वयं पर्य्यनुयोज्या इत्याह॥ सर्व्वगतेति॥ वस्तुतस्तेषामेव भोगसाङ्कर्य्यमित्यग्रे वक्ष्यते। ब्रह्मणो जीवाभिन्नत्वं श्रुत्या निश्चित्य तेन भोक्तृत्वानुमाने उपजीव्यश्रुतिबाधमाह॥ यथाशास्त्रमिति॥ अर्द्धं मुखमात्रं जरत्या इच्छायां कामयते नाङ्गानीति सोऽयमर्द्धजरतीयन्यायः स च अत्र न युक्तः। न ह्यभेदमङ्गीकृत्याभोक्तृत्वं त्यक्तुं युक्तं श्रुत्यैवाभेद-

दिविशिष्टमेव परमार्थतो व्योम भवति । तदाह "न वैशेष्यात्' इति । नैकत्वेऽपि शारीरस्योपभोगेन ब्रह्मण उपभोगप्रसङ्गो वैशेष्यात् । विशेषो हि भवति मिथ्याज्ञानसम्यग्ज्ञानयोः । मिथ्याज्ञानकल्पित उपभोगः, सम्यग्ज्ञानदृष्टमेकत्वम् । न च मिथ्याज्ञानकल्पितेनोपभोगेन सम्यग्ज्ञानदृष्टं वस्तु संस्पृश्यते, तस्मान्नोपभोगगन्धोऽपि शक्य ईश्वरस्य कल्पयितुम् । १।२।८अ० ।

## अत्ता चराचरग्रहणात् ॥ ९ ॥

कठवल्लीषु पठ्यते "यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः मृत्युर्यस्योपसेचनं, क इत्था वेद यत्र सः" इति । अत्र कश्चिदोदनोपसेचनसूचितोऽत्ता प्रतीयते । तत्र किमग्निरत्ता स्यादुत जीवोऽथवा परमात्मेति संशयः, विशेषानवधारणात्, त्रयाणाञ्चाग्निजीवपरमात्मनामस्मिन् ग्रन्थे प्रश्नोपन्यासोपलब्धेः ।

सिद्धान्तं भाक्तत्ववारणादित्याह ॥ शास्त्रेति ॥ नन्वेकत्वं यथा श्रुत्या न गृहीतं येनोपभोगव्यवस्था स्यात् । किन्तु तदुक्त्या गृहीतमित्याशङ्क्य बिम्बप्रतिबिम्बयोः कल्पितभेदेन भोक्तृत्वाभोक्तृत्वव्यवस्थोपपत्तेरप्रयोजको हेतुरित्याह ॥ अथ गृहीतमित्यादिना ॥ कल्पितासङ्गत्वमधिष्ठानस्य वैशेष्यमित्यस्मिन्नर्थेऽपि सूत्रं पातयति ॥ तदाहेति ॥ ब्रह्मणो हार्दत्वे बाधकाभावाच्छाण्डिल्यविद्यावाक्यं ब्रह्मण्युपास्ये समन्वितमिति सिद्धम् । अत्ता चराचरग्रहणात् । यस्य ब्रह्मक्षत्रादिजगदोदनो मृत्युः सर्वप्राणिमारकोऽपि यस्योपसेचनमोदनसंस्कारकघृतप्रायं सोऽत्ता यत्र शुद्धे चिन्मात्रेऽभेदकल्पनया वर्त्तते तच्छुद्धं ब्रह्म इत्था इत्थम् ईश्वरस्याप्यधिष्ठानभूतं को वेद, चित्तशुद्ध्याद्युपायं विना कोऽपि न जानातीत्यर्थः ॥ संशयबीजमाह ॥ विशेषेति ॥ स त्वमग्निं प्रब्रूहीत्यग्नेः, येयं प्रेते विचिकित्सेति जीवस्य, अन्यत्र धर्मादिति ब्रह्मणः प्रश्नः । लोकादिमग्निं तमुवाचेत्यग्नेः, हन्त त इदं प्रवक्ष्यामीतीतरयोः प्रतिवचनमुपलभ्यते

किन्तावत् प्राप्त, अग्निरत्तेति। कुत'। "अग्निरन्नादः" इति श्रुतिप्रसिद्धिभ्यां। जीवो वाऽत्ता स्यात् "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति दर्शनात्। न परमात्मा "अनश्नन्नन्योऽभिचाकशीति" इति दर्शनादित्येव प्राप्ते ब्रूम', अत्तात्र परमात्मा भवितुमर्हति। कुतः। चराचरग्रहणात्। चराचरं हि स्थावरजङ्गमं मृत्यूपसेचनमिहाद्यत्वेन प्रतीयते। तादृशस्य चाद्यस्य न परमात्मनोऽन्यः कार्त्स्न्येनात्ता सम्भवति, परमात्मा तु विकारजातं संहरन् सर्व्वमत्तीत्युपपद्यते। नन्विह चराचरग्रहणं नोपलभ्यते, तत् कथं सिद्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते। नैष दोषः। मृत्यूपसेचनत्वेन सर्व्वस्य प्राणिनिकायस्य प्रतीयमानत्वाद् ब्रह्मचत्रयोश्च प्राधान्यात् प्रदर्शनार्थत्वोपपत्तेः। यत्तु परमात्मनोऽपि नात्तृत्वं सम्भवति "अनश्नन्नन्योऽभिचाकशीति" इतिदर्शनादिति, अत्रोच्यते, कर्मफलभोगस्य प्रतिषेधकमेतद्दर्शनं तस्य सन्निहितत्वात्, न विकारसंहारस्य प्रतिषेधकं, सर्व्ववेदान्तेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्रसिद्धत्वात्, तस्मात् परमात्मैवेहात्ता भवितुमर्हति।

इत्यर्थः। पूर्व्वत्र ब्रह्मणो भोक्तृत्वं नास्तीत्युक्तं तदुपजीव्य पूर्व्वपक्षयति॥ किं तावदिति॥ अग्निप्रकरणमतीतमित्यरुचेराह॥ जीवो वेति॥ पूर्व्वपक्षे जीवोपास्तिः सिद्धान्ते निर्विशेषब्रह्मज्ञानमिति फलभेदः। ओदनशब्दो भोज्यवाचीति पूर्व्वपक्षः, सिद्धान्तस्तु ब्रह्मक्षत्रशब्दैः परस्यापि तत्कार्य्यमात्रे गौण ओदनशब्दः। गुणश्चात्र मृत्यूपसेचनपदेन सन्निधापितः प्रसिद्धौदनगतविनाश्यत्वं गृह्यते गौणशब्दस्य सन्निहितगुणपरत्वात्। तथा च सर्व्वस्य विनाश्यत्वेन भानाद्विश्वादीश्वरोऽत्तेत्याह॥ नैष दोष

## प्रकरणाच्च ॥ १० ॥

इतश्च परमात्मैवेहात्ता भवितुमर्हति यत्कारणं प्रकरणमिदं परमात्मनः "न जायते म्रियते वा विपश्चित्" इत्यादि। प्रकृतग्रहणञ्च न्याय्यम्। "क इत्था वेद यत्र सः" इति च दुर्विज्ञानत्वं परमात्मलिङ्गम्।

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥

कठवल्लीष्वेव पठ्यते

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः"॥

इति। तत्र संशयः। किमिह बुद्धिजीवौ निर्दिष्टौ, उत जीवपरमात्मानाविति। यदि बुद्धिजीवौ ततो बुद्धिप्रधानात् कार्यकारणसङ्घाताद् विलक्षणो जीवः प्रतिपादितो भवति, तदपीह प्रतिपादयितव्यम्। 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वरा-

---

इति॥ तस्य भक्षिर्हितत्वादिति पिप्पलं स्वाद्वत्तीति भोगस्य पूर्वोक्तत्वादित्यर्थः। अनुवाक्यानन्तरवाक्यस्यापि ज्ञेयात्मनि समन्वयमाह॥ गुहामिति॥ ऋतमवश्यम्भावि कर्मफलं पिबन्तौ भुञ्जानौ सुकृतस्य कर्मणो लोके कार्ये देहे परस्य ब्रह्मणोऽर्द्धं स्थानमर्हतीति परार्द्धं हृदयं परमं श्रेष्ठं तस्मिन् या गुहा नभोरूपा बुद्धिरूपा वा तां प्रविश्य स्थितौ छायातपवत् मिथोविरुद्धौ तौ च ब्रह्मविदः कर्मिणश्च वदन्ति। त्रिश्चितोऽग्निश्चितो यैस्ते त्रिणाचिकेताः तेऽपि वदन्तीत्यर्थः। नाचिकेतवाक्यानामत्राध्ययनं तदर्थत्वान् तदनुष्ठानस्येति मिथ बोध्यम्। बुद्धिविशिष्टजीवस्य परमात्मनश्च प्रकृतत्वात् समन्वयमाह॥ तत्रेति॥ पूर्वोत्तरपक्षयोः फलं स्वयमेवाह॥ यदीत्यादिना॥ तदपि जीवस्य बुद्धिवैलक्षण्यमपीत्यर्थः। मनुष्ये प्रेते मृते सति येयं विचिकित्सा संशयः परलोकभोक्ताऽस्तीत्येके

कामेषु वरस्तृतीयः" इति पृष्टत्वात्। अथ जीवपरमात्मानौ, ततो जीवाद्विलक्षणः परमात्मा प्रतिपादितो भवति, तदपीह प्रतिपादयितव्यम्। "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतादन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" इति पृष्टत्वात्। अत्राह आक्षेप्ता उभावप्येतौ पक्षौ न सम्भवतः। कस्मात्। ऋतपानं कर्मफलोपभोगः, सुकृतस्य लोक इति लिङ्गात्। तच्च चेतनस्य क्षेत्रज्ञस्य सम्भवति नाचेतनाया बुद्धेः। पिबन्ताविति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः। अतो बुद्धिक्षेत्रज्ञपक्षस्तावन्न सम्भवति। अत एव क्षेत्रज्ञपरमात्मपक्षोऽपि न सम्भवति चेतनेऽपि परमात्मनि ऋतपानासम्भवात् "अनश्नन्नन्योऽभिचाकशीति" इति मन्त्रवर्णादिति। अत्रोच्यते। नैष दोषः। छत्रिणो गच्छन्तीत्येकेनापि छत्रिणा बहूनां छत्रित्वोपचारदर्शनात् एवमेकेनापि पिबता द्वौ पिबन्तावुच्येयाताम्। यद्वा जीवस्तावत्पिबति, ईश्वरस्तु पाययति, पाययन्नपि पिबतीत्युच्यते। पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात्। बुद्धिक्षेत्रज्ञपरिग्रहोऽपि सम्भवति, करणे कर्तृत्वोपचा-

---

नास्तीत्यन्ये, अतस्त्वयोपदिष्टोऽहमेतद् तत्त्वं जानीयामित्यर्थः। तद-पीति परमात्मस्वरूपमपीत्यर्थः। उभयोर्भोक्तृत्वायोगेन पक्षद्वयमाक्षिपति॥ अत्राहेति॥ छत्रिपदेन गन्तार इव पिबत्पदेनाजहल्लक्षणया प्रविष्टावुच्येते इत्याह॥ अत्रोच्यत इति॥ पानकर्तृवाचिपदेन पानानुकूलौ वा लक्ष्यावित्याह॥ यद्वेति॥ नियतपूर्वभाविकृतिमत्त्वरूपमनुकूलत्वं कर्तृकारयित्रोः साधारण्यं च। कारयति च करोत्येवेति न्यायादिति भावः। अत्र प्रकृतिलक्ष्यार्थौ प्रत्यये लक्षणाभिप्रायेऽत्र इति प्रत्ययार्थौ हुक्त्य। प्रकृत्या त्वजहल्लक्षणया पायनं लक्ष्यमित्याह। पूर्वपक्षे पिबन्ताविति तद्धितार्थप्रत्ययेन बुद्धिजीवसाधारण्यं कारकत्वं लक्ष्यमित्याह॥

रात्, एधांसि पचन्तीति प्रयोगदर्शनात् । न चात्माधिकारेऽन्यौ कौचित्सुकृतं पिबन्तौ सम्भवतः, तस्माद्बुद्धिजीवौ स्याताम् जीवपरमात्मानौ वेति संशयः । किं तावत्प्राप्तं बुद्धिक्षेत्रज्ञाविति । कुतः । गुहां प्रविष्टाविति विशेषणात् । यदि शरीरं गुहा यदि वा हृदयमुभयथापि बुद्धिक्षेत्रज्ञौ गुहां प्रविष्टावुपपद्येते । न च सति सम्भवे सर्वगतस्य ब्रह्मणो विशिष्टदेशत्वं युक्तं कल्पयितुम् । 'सुकृतस्य लोके' इति च कर्मगोचरानतिक्रमं दर्शयति । परमात्मा तु न सुकृतस्य दुष्कृतस्य वा गोचरे वर्त्तते । "न कर्मणा वर्द्धते नो कनीयान्" इति श्रुतेः । छायातपाविति च चेतनाचेतनयोर्निर्देश उपपद्यते छायातपवत् परस्परस्य विलक्षणत्वात् । तस्माद्बुद्धिक्षेत्रज्ञाविहोच्येयातामित्येव प्राप्ते ब्रूमः । विज्ञानात्मपरमात्मानाविहोच्येयाताम् । कस्मात् । आत्मानौ हि तावुभावपि चेतनौ समानस्वभावौ, सङ्ख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते, अस्य

बुद्धीति ॥ एधांसि काष्ठानि पचन्तीत्याख्यातेन कारकत्वं लक्ष्यं पक्तृत्वस्तु मुख्यैवेति भावः । मुख्यपातारौ प्रसिद्धपक्षिणौ ग्राह्याविन्युक्त आह ॥ न चेति ॥ ऋतपानपदस्य सन्निहितस्त्यपदादनित्यवस्तुपरत्ववदिहापि पिबत्पदस्य सन्निहितगुहापदाद् बुद्धिजीवपरतेति दृष्टान्तेन पूर्व्वपक्षयति ॥ किं तावदिति ॥ गोचरः फलम् । एकस्मिन् जातिमति श्रुते सजातीयमेव द्वितीयं ग्राह्यम् । व्यक्तिमात्रपक्षे लाघवात् न विजातीयं जातिद्वयकल्पनागौरवात् । न चास्तु कारकत्वेन सजातीया बुद्धिरेव जीवस्य द्वितीयेति वाच्यं, चेतनत्वस्य जीवस्वभावस्य कारकत्वादन्तरङ्गत्वात् । तथा च लोके द्वितीयस्यान्तरङ्गजातिमत्त्वदर्शनाज्जीवस्य द्वितीयश्चेतन एवेति सूत्रार्थ इति ॥ सङ्ख्याश्रवणे चेति ॥ गुहायां

गोर्द्वितीयोऽन्वेष्टव्य इति उक्ते गौरेव द्वितीयोऽन्विष्यते नाश्व पुरुषो वा, तद्विह ऋतपानेन लिङ्गेन निश्चिते विज्ञानात्मनि द्वितीयान्वेषणायां समानस्वभावश्चेतन परमात्मैव प्रतीयते। ननूक्तं गुहाहितत्वदर्शनात् न परमात्मा प्रत्येतव्य इति। अत्र वदामः। गुहाहितत्वन्तु श्रुतिस्मृतिष्वसकृत् परमात्मन एव दृश्यते। "गुहाहितं गह्वरेष्ठं पुराणं", "यो वेद निहितं गुहायां परमे व्योमन्", "आत्मानमन्विच्छ गुहां प्रविष्टम्" इत्याद्यासु। सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थो देशविशेषोपदेशो न विरुध्यत इत्येतदप्युक्तमेव। सुकृतलोकवर्त्तित्वन्तु छत्रित्ववदेकस्मिन्नपि वर्त्तमानमुभयोरविरुद्धम्। छायातपावित्यप्यविरुद्धम्। छायातपवत् परस्परविलक्षणत्वात् संसारित्वासंसारित्वयोः। अविद्याकृतत्वात् संसारित्वस्य पारमार्थिकत्वाच्चासंसारित्वस्य, तस्माद्विज्ञानात्मपरमात्मानौ गुहां प्रविष्टौ गृह्येते। कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते।

## विशेषणाच्च ॥ १२ ॥

विशेषणाच्च विज्ञानात्मपरमात्मनोरेव सम्भवति "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादिना परेण ग्रन्थेन

---

गुहायां स्थितं गह्वरे अनेकानर्थसङ्कुले देहे स्थितं पुराणमनादिपुरुषं विदित्वा हर्षशोकौ जहाति परमस्मिन् व्योमन्, हार्दाकाशे या गुहा बुद्धिस्तस्यां निहितं ब्रह्म यो वेद सोऽश्नुते सर्वान् कामानित्यन्वय, अन्विच्छ विचारयेत्यर्थः। विशेषणं गन्तृगन्तव्यत्वादिकं लिङ्गमाह॥ विशेषणाच्चेति॥ स जीवोऽध्वनः संसारमार्गस्य परमं पारं किं तत्, विष्णोर्व्यापनशीलस्य परमात्मनः पदं स्वरूपमाप्नोतीत्यर्थः। इदंमेव द्वयोर

रथिरथादिरूपककल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गन्तारं कल्पयति। “सोऽध्वनः पारमाप्नोति” “तद्विष्णोः परमं पदम्” इति परमात्मानं गन्तव्यं कल्पयति। तथा “त दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति” इति पूर्वस्मिन्नपि ग्रन्थे मन्तृमन्तव्यत्वेनैतावेव विशेषितौ। प्रकरणञ्चेदं परमात्मनः। ब्रह्मविदो वदन्तीति च वक्तृविशेषोपादानं परमात्मपरिग्रहे घटते, तस्मादिह जीवपरमात्मानावुच्येयाताम्। एष एव न्यायो “द्वा सुपर्णा सयुजा सखाया” इत्येवमादिष्वपि। तत्रापि ह्यध्यात्माधिकारान्न प्राकृतौ सुपर्णावुच्येते, “तयोरन्यः पिप्पलं स्वाद्वत्ति” इत्यदनलिङ्गाद्विज्ञानात्मा भवति। ‘अनश्नन्नन्योऽभिचाकशीति’ इत्यनशनचेतनत्वाभ्यां परमात्मा। अनन्तरे च मन्त्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि “समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीत-

तत्र हेतुर्गूढमायावृत्त मायानुप्रविष्ट पश्चाद् गुहानिहित गुहाद्वारा गह्वरेष्ठम्, एवं बहिरागतमात्मानमध्यात्मयोग स्थूलसूक्ष्माकारपदेहत्रयक्रमेण प्रत्यगात्मनि चित्तसमाधानं तेनाधिगमो महावाक्यजा वृत्ति तया विदित्वेत्यर्थः। ऋतपानमन्त्रे जीवानुवादेन वाक्यार्थज्ञानाय तत्पदार्थोऽत्र प्रतिपाद्यत इति उपसंहरति॥ तस्मादिहेति॥ उक्तन्यायमतिदिशति॥ एष इति॥ द्वा द्वौ छान्दसो विभक्त्याकारः। सुपर्णाविव सहैव युज्येते नियम्य नियामकभावेनेति। सयुजौ सखायौ चेतनत्वेन तुल्यस्वभावौ। समानमेकं वृक्षमुच्छेदनयोग्यं शरीरमाश्रित्य स्थिताविति-

शोकः" इति। अपर आह। द्वा सुपर्णेति नेयमृगस्याधिकरणस्य सिद्धान्तं भजते, पैङ्गिरहस्यब्राह्मणेनान्यथा व्याख्यातत्वात्, 'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्। अनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति" सत्त्वशब्दो जीवः क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते, तन्न। सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणशारीरपरतया प्रसिद्धत्वात् तत्रैव च व्याख्यातत्वात्, "तदेतत् सत्त्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ" इति। नाप्यस्याधिकरणस्य पूर्वपक्षं भजते। न ह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिसंसारधर्मोपेतो विवक्ष्यते, कथं तर्हि, सर्वसंसारधर्मातीतो ब्रह्मस्वभावश्चैतन्यमात्रस्वरूपः, "अनश्नन्नन्यो-

त्यर्थः। गुहां प्रविष्टाविति यावत्। एतावात्मानौ। तल्लिङ्गदर्शनादित्याह॥ तयोरन्य इति॥ विशेषणाच्चेत्याह॥ अनन्तरे चेति॥ अनीशया स्वस्येश्वरत्वाप्रतीत्या देहनिमग्नः पुरुषो जीवः शोचति। निमग्नपदार्थमाह॥ मुह्यमान इति॥ नवोऽहमिति भ्रान्त इत्यर्थः। जुष्टं ध्यानादिना सेवितं यदा ध्यानपरिपाकदशायामीशमस्य बिम्बरूपात् भिन्नं शोधितचिन्मात्रं प्रत्यैकत्वेन पश्यति तदाऽस्य महिमानं स्वरूपमेति प्राप्नोतीव ततो वीतशोको भवतीत्यर्थः। द्वा सुपर्णेतिवाक्यं जीवेश्वरमिति कृत्वा चिन्तितम्। अधुना सूत्रा चिन्तामुद्घाटयति॥ अपर इति॥ अन्यथा बुद्धिजीवपरत्वान्मदुक्तपरत्वं नेत्यर्थः॥ सत्त्वं बुद्धिरिति शङ्कते॥ सत्त्वशब्द इति। बुद्धिजीवौ चेत् पूर्वपक्षार्थं स्यादित्यत आह॥ नापीति॥ पूर्वपक्षार्थस्तदा स्याद् यद्यत्र बुद्धिभिन्नः संसारी प्रतिपाद्यते, न ह्यत्र संसारी विवक्ष्यते। किन्तु शोधितत्वमर्थो ब्रह्मेत्यर्थः। श्रुतिस्मृतिभ्यां त्वमर्थो ब्रह्म इति शेषः। तावता सत्त्वव्याख्यामात्रेण। एवमेव जीवस्य ब्रह्मत्वोक्त्यावेव। न हि जीवो बुद्धि-

ऽभिपश्यति यः” इति वचनात्। “तत्त्वमसि”, “क्षेत्रज्ञञ्चापि मा विद्धि” इत्यादिश्रुतिस्मृतिभ्यश्च। तावता च विद्योपसंहारदर्शनमेवमेवावकल्पते, “तावेतौ सत्त्वक्षेत्रज्ञौ”, “न ह वा एवंविदि किञ्चन रज आध्वंसते” इत्यादि। कथं पुनरस्मिन् पक्षे “तयोरन्यः पिप्पलं स्वाद्वत्ति” इति सत्त्वम्, इत्यचेतने सत्त्वे भोक्तृत्ववचनमिति। उच्यते। नेय श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्व वक्ष्यामीति प्रवृत्ता। किं तर्हि चेतनस्य क्षेत्रज्ञस्याभोक्तृत्व ब्रह्मस्वभावता वक्ष्यामीति। तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति॥ इदं हि कर्तृत्वं भोक्तृत्व सत्त्वक्षेत्रज्ञयोरितरेतरस्वभावाविवेककृत कल्प्यते, परमार्थतस्तु नान्यतरस्यापि सम्भवति, अचेतनत्वात् सत्त्वस्य, अविक्रियत्वाच्च क्षेत्रज्ञस्य, अविद्याप्रत्युपस्थापित स्वभावत्वाच्च सत्त्वस्य सुतरा न सम्भवति। तथा च श्रुति “यत्र वान्यदिव स्यात्, तत्रान्योऽन्यत्पश्येत्” इत्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहार दर्शयति। “यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन क पश्येत्” इत्यादिना च विवेकिन: कर्तृत्वादिव्यवहार वारयति।

भिन्न इति विवेकमात्रेणोपचारो युक्त। भेदज्ञानस्य भ्रान्तित्वाद्वैफल्याच्चेति भाव। अविद्या विदुषि किमपि स्वकार्य नाध्वंसते न सम्पादयति, ज्ञानाग्निना दग्धा एव दग्धपटादिवदर्थ। अविद्या नागच्छतीति वाऽर्थ। जीवस्य ब्रह्मत्वपरमिद वाक्यमिति पक्षे शङ्कते॥ कथमिति॥ वक्तुर्भोक्तृत्वोक्तावतात्पर्यात्। नात्र युक्तिचिन्तया मन खेदनीयमित्याह॥ उच्यत इति॥ तदर्थं ब्रह्मत्वबोधनार्थं भोक्तृत्वमुपाधि-

## अन्तर उपपत्तेः॥ १३॥

"य एषोऽक्षिणि पुरुषो दृश्यत, एष आत्मेति होवाचैतद-मृतमभयमेतद्ब्रह्म" इति, "तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति, वर्त्मनी एव गच्छति" इत्यादि श्रूयते। तत्र संशय। किमयं प्रतिबिम्बात्माऽक्ष्यधिकरणो निर्दिश्यते, अथ विज्ञा-नात्मा, उत देवतात्मेन्द्रियस्याधिष्ठाताऽथवेश्वर इति। किं तावत्प्राप्त, छायात्मा पुरुषप्रतिरूप इति। कुतः। तस्य दृश्य-मानत्वप्रसिद्धेः "य एषोऽक्षिणि पुरुषो दृश्यते" इति च प्रसिद्ध-वदुपदेशात्। विज्ञानात्मनो वा अयं निर्देश इति युक्तम्। स हि चक्षुषा रूपं पश्यन् चक्षुषि सन्निहितो भवति, आत्म

मस्तके निक्षिपतीत्यर्थः। वस्तुतो जीवस्याभोक्तृत्वे भोक्तृत्वधीः कथ-मित्यत आह॥ इदं होति॥ चित्तादात्म्येन कल्पिता बुद्धिः सुखादि-रूपेण परिणमते बुद्ध्यविवेकाच्चिदात्मनः सुखादिरूपप्रत्ययाभिव्यक्तचैतन्य-वत्त्वं भोक्तृत्वं भातीत्यर्थः। भोक्तृत्वमाविद्यकं न वस्तुत इत्यत्र मानमाह॥ तथा चेति॥ यस्मादविद्याकाले चैतन्यं भिन्नमिव भवति तदा द्रष्टृत्वादिकं न वस्तुनि ज्ञायत इत्यर्थः। तस्मादृतं पिबन्ताविति वाक्यमेव गुहाधि-करणविषय इति स्थितम्। अन्तर उपपत्तेः। उपकोसलविद्यावाक्य-मुदाहरति॥ य इति॥ तदधिष्ठानमसङ्गत्वेन ब्रह्मणोऽनुरूपं यतो-ऽस्मिन् क्षिप्तं वर्त्मनी पक्ष्मणी एव गच्छतीत्यर्थः। दर्शनस्य लौकिकत्व-शास्त्रीयत्वाभ्यां संशयमाह॥ तत्रेति॥ पूर्वं पिबन्ताविति प्रथमश्रुत-चेतनत्वानुसारेण चरमश्रुता गुहाप्रवेशादयो नीताः, तद्वदिहापि दृश्यत इति चाक्षुषत्वानुसारेणामृतत्वादयो ध्यानार्थं कल्पितत्वेनानेया इति दृष्टान्तेन पूर्वपक्षयति॥ छायात्मेति॥ पूर्वपक्षे प्रतिबिम्बोपास्तिः सिद्धान्ते ब्रह्मोपास्तिरिति फलम्। प्रसिद्धवदिति॥ चाक्षुषत्वेनेत्यर्थः। सम्भावनामात्रेण पक्षान्तरमाह॥ विज्ञानात्मन इत्यादिना॥ मनो ब्रह्मेतिवत्, एतद्ब्रह्मेति इति वाक्यस्थेतिपदविरसत्वात्‌न स्वार्थपर-

शब्दस्यास्मिन् पक्षेऽनुकूलो भवति। आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः प्रतीयते "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति श्रुतेः। अमृतत्वादीनाञ्च देवतात्मन्यपि कथञ्चित् सम्भवात्, नेश्वरः, स्थानविशेषनिर्देशादित्येवं प्राप्ते ब्रूमः। परमेश्वर एवात्राक्षिण्यभ्यन्तरः पुरुष इहोपदिष्ट इति। कस्मात्। उपपत्तेः। उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्यमानम्। आत्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते "स आत्मा", "तत्त्वमसि" इति श्रुतेः। अमृतत्वाभयत्वे च तस्मिन्नसकृत् श्रूयेते। तथा परमेश्वरानुरूपमेतदक्षिस्थानम्। यथा हि परमेश्वरः सर्वदोषैरलिप्तोऽपहतपाप्मत्वादिश्रवणात्, तथाक्षिस्थानं सर्वलेपरहितमुपदिष्टं "तद्यद्यप्यस्मिन् सर्पिर्व्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" इति श्रुतेः। संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते "एतं संयद्वाम इत्याचक्षते एतं हि सर्व्वाणि वामान्यभिसंयन्ति। एष उ एव वामनीरेष हि सर्व्वाणि वामानि नयन्ति। एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति" इति च। अत उपपत्तेरन्तरः परमेश्वरः॥

त्वमिति पूर्व्वपक्षः। मनो ब्रह्मेत्युपासीतेत्यत्र इति पदस्य प्रत्ययपरत्वात्। इह च ब्रह्मेत्युवाचेत्यन्वयेन इतिपदस्योक्तिसम्बन्धिनोऽर्थपरत्वाद्वैषम्यमिति सिद्धान्तयति॥ परमेश्वर एवेति॥ चक्षुःप्रमाणसंवादस्तात्पर्य्यानुग्राहक इति न्यायानुगृहीताभ्यामात्मामृतश्रुतिभ्यां स्थानलिङ्गं बाध्यमित्याह॥ संयद्वामेति॥ वामानि कर्म्मफलान्येनमेतमक्षिपुरुषमभिलक्ष्य संयन्ति उत्पद्यन्ते सर्व्वफलोदयहेतुरित्यर्थः। लोकानां फलदातायमेवेत्याह॥ भामनीरिति॥ नयति फलानि लोकान् प्रापयतीत्यर्थः। भासानि भामानि नयत्ययमित्याह॥ भामनीरिति॥ सर्वार्थ

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

अथ पुनराकाशवत्सर्वगतस्य ब्रह्मणोऽक्ष्यल्पस्थानमुपपद्यत इति। अत्रोच्यते। भवेदेषाऽनवक्लृप्तिः यद्येतदेवैकं स्थानमस्य निर्दिष्टं भवेत्। सन्ति ह्यन्यान्यपि पृथिव्यादीनि स्थानान्यस्य निर्दिष्टानि "यः पृथिव्यां तिष्ठन्" इत्यादिना। तेषु हि चक्षुरपि निर्दिष्टं यश्चक्षुषि तिष्ठन्निति। स्थानादिव्यपदेशादित्यादिग्रहणेनैतद्दर्शयति। न केवलं स्थानमेवैकमनुचितं ब्रह्मणो निर्दिश्यते, किं तर्हि नामरूपमित्येवं जातीयकमप्यनामरूपस्य ब्रह्मणोऽनुचितं निर्दिश्यमानं दृश्यते, "तस्योदिति नाम हिरण्यश्मश्रुरित्यादि। निर्गुणमपि सत् ब्रह्म नामरूपगतैर्गुणैः सगुणमुपासनार्थं तत्र तत्रोपदिश्यत इत्येतदप्युक्तमेव। सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यते शालग्राम इव विष्णोरित्येतदप्युक्तमेव।

## सुखविशिष्टाभिधानादेव च ॥ १५ ॥

अपि च, नैवात्र विवदितव्यं, किं ब्रह्मास्मिन् वाक्येऽभिधीयते न वेति। सुखविशिष्टाभिधानादेव ब्रह्मत्वं सिद्धम्। सुखविशिष्टं हि ब्रह्म यद्वाक्योपक्रमे प्रक्रान्तं "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति, तदेवेहाभिहितं, प्रकृतपरिग्रहस्य न्याय्य-

प्रकाशक इत्यर्थः। सगुणब्रह्मणो ध्यानार्थं स्थलादेरप्युपदेश इति ध्यानस्योक्तिरिति न दोष इति सूत्रयोजना। अनवक्लृप्तिः अक्लृप्तकल्पना तदा भवेद्यद्येव निर्दिष्टं भवेदिदमस्य। नन्वनुचितवाक्यस्योक्तिरप्रमाणमित्याशङ्क्य युक्तिमाह॥ निर्गुणमपीति॥ प्रकरणादपि ब्रह्मग्राह्यमित्याह॥ सुखविशिष्टेति॥ ध्यानार्थं भेदकल्पनया सुखगुणविशिष्टस्य

त्वात् "आचार्यस्तु ते गतिं वक्ता" इति च गतिमात्राभिधानप्रतिज्ञानात्। कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इति। उच्यते। "प्राणो ब्रह्म, कं ब्रह्म खं ब्रह्म" इत्येतदग्नीनां वचनं श्रुत्वोपकोसल उवाच। "विजानाम्यहं यत्प्राणो ब्रह्म, कञ्च खञ्च तु न विजानामि" इति। तत्रेदं प्रतिवचनम्। "यद्वाव कं, तदेव खं, यदेव खं तदेव कं" इति। तत्र खंशब्दो भूताकाशे निरूढो लोके। यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत, तथा सति केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रतीकाभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात्। तथा कंशब्दस्य विषयेन्द्रियसम्पर्कजनिते सामये सुखे प्रसिद्धत्वात्, यदि तस्य खंशब्दो विशेषणत्वेन नोपादीयेत, लौकिकं सुखं ब्रह्मेति प्रतीतिः स्यात्। इतरेतरविशेषितौ तु कंखंशब्दौ

---

ब्रह्मणः प्रकृतस्य स एष इति सर्वनाम्नाभिधानादन्तरः परमात्मा स्यादिति सूत्रार्थः। ननु प्रकरणात् प्रबलेन दृश्यत्वलिङ्गेनोपस्थापितश्छायात्मा सर्वनामार्थः स्यादित्यत आह॥ आचार्यस्त्विति॥ उपकोसलो नाम कश्चित् ब्रह्मचारी जाबालस्याचार्यस्याग्नीन् द्वादश वत्सरान् परिचचार। तमननुपदिश्य देशान्तरगते आचार्ये, गार्हपत्याद्यग्निभिर्दयया प्राणो ब्रह्मेत्यात्मविद्यामुपदिश्योक्तम्॥ आचार्यस्त्विति॥ तवात्मविद्याफलप्राप्तये मार्गमर्चिरादिकं वदिष्यतीत्यर्थः। पश्चादाचार्येणागत्य य एषोऽक्षिणीत्युक्त्वार्चिरादिका गतिरुक्ता। तथा चाग्निभिरुक्तात्मविद्यावाक्यस्य गतिवाक्येनैकवाक्यता वाच्या; सा च सर्वनाम्ना प्रकृतात्मपरामर्शे निर्वहतीत्येकवाक्यतानिर्वाहकं प्रकरणं वाक्यभेदकाल्लिङ्गाद्बलवदिति भावः। श्रुतिं व्याचष्टे॥ उच्यत इति॥ प्राणस्य सूत्रात्मनो ब्रह्मरूपत्वाद्ब्रह्मेति यत् तज्जानामि कं विषयसुखं खञ्च भूताकाशं ब्रह्मत्वेन ज्ञातुं न शक्नोमीत्यर्थः। खं कथम्भूतं यत् कं तदेव खमिति सुखेन विशेषितस्य खस्य भूतत्वनिरासः। तथा कं कथम्भूतं यत् खं तदेव कमिति विभुत्वेन विशेषि-

सुखात्मकं ब्रह्म गमयतः । तत्र द्वितीये ब्रह्मशब्देऽनुपादीयमाने कं ब्रह्मेत्येवोच्यमाने कंशब्दस्य विशेषणत्वेनैवोपयुक्तत्वात् सुखस्य गुणस्याध्येयत्वं स्यात्, तन्मा भूदित्युभयोः कखशब्दयोः ब्रह्मशब्दशिरस्त्वं कं ब्रह्म खं ब्रह्मेति । इष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वम् । तदेवं वाक्योपक्रमे सुखविशिष्टं ब्रह्मोपदिष्टम् । प्रत्येकञ्च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुपदिश्य "एषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या च" इत्युपसंहरन्तः पूर्वत्र ब्रह्म निर्दिष्टमिति ज्ञापयन्ति । "आचार्यस्तु ते गतिं वक्ता" इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति । 'यथा पुष्करपलाश आपो न श्लिष्यन्ते, एवमेव विदि पापं कर्म न श्लिष्यते" इति चाक्षिस्थानं पुरुषं

---

तस्य कस्य जन्यत्वनिरास इति व्यतिरेकमुखेनाह ॥ तत्र द्वितीयेत्यादिना ॥ आत्मविद्येतिश्रुतिविरोधात् प्रतीकध्यानमात्रमनिष्टमिति भावः । अना-मय इति । आमयो दोषः । साधनपारतन्त्र्यानित्यत्वादि तद्रहित इत्यर्थः । प्रत्येकपक्षे दोषमुक्त्वा द्वयोपक्षे फलितमाह ॥ इतरेतरेति ॥ विशेषितार्थकार्थवत्त्वम् । नन्वेकं ब्रह्मैवात्र ध्येयं चेद् ब्रह्मपदान्तरं कि-मर्थमित्यत आह ॥ तत्रेति ॥ विशेषणत्वेन खस्य भूतत्वव्यावर्तकत्वेने-त्यर्थः । ब्रह्मशब्दः शिरो ययोस्तत्त्वमिति विग्रहः । अध्येयत्वे को दोष-स्तत्राह ॥ इष्टं हीति ॥ मार्गोक्त्या सगुणविद्यात्वावगमादिति भावः । आत्मविद्यापदेनोपकोसलस्यापि प्रकृतं ब्रह्मोक्तमित्याह । प्रत्येकञ्चेति । पृथि-व्यग्निरन्नमादित्य इति मम चतस्रस्तनवो विभूतिरिति गार्हपत्य उपदि-देश । आपो दिशो नक्षत्राणि चन्द्रमा इति अन्वाहार्यो वचनम् उवाच । प्राण आकाशो द्यौर्विद्युदिति स्वमहिमानमाहवनीयो जगादेति भावः । इयमस्माकमग्नीनां विद्या प्रत्येकमुक्ता आत्मविद्या तु पूर्वमस्माभिर्मिलित्वा प्राणो ब्रह्मेत्युक्तेत्यर्थः । उक्ततात्पर्याग्निभिर्ब्रह्मात्मा गुरुणोच्यतां वक्तृभेदादिति मत्वाह ॥ आचार्यस्त्विति ॥ एकवाक्यता

विजानतः पापेनानुपघातात् अक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति। तस्मात्प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामत्वादिगुणतां चोक्त्वा अर्च्चिरादिकां तद्विदो गतिं वक्ष्यामीति उपक्रमते "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच"

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

इतश्चाक्षिस्थानः पुरुषः परमेश्वरः यस्मात् श्रुतोपनिषत्कस्य श्रुतरहस्यस्य विज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ, "अथोत्तरेण तपसा ब्रह्मचर्य्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजायन्ते, एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्त्तन्ते" इति श्रुतौ। स्मृतावपि।

---

निश्चयाद्देहभेदेऽपि न भयम् इत्यर्थः। श्रुता अनुष्ठिता उपनिषद्रहस्यं सगुणब्रह्मोपासनं येन तस्य या गतिः श्रुतौ स्मृतौ च प्रसिद्धा तस्या अत्राभिधानात् लिङ्गादपि इति सूत्रार्थमाह॥ इतश्चेति॥ यस्मात् दृश्यते तस्मादित्यन्वयः। श्रुतिमाह॥ अथेति॥ देहपातानन्तरमित्यर्थः। स्वधर्म्मरूप तपोब्रह्मचर्य्यश्रद्धाविद्याभिः आत्मानं ध्यात्वा तया ध्यानविद्ययोत्तरं देवयानमार्गं प्राप्यते नोत्तरेण पथा। आदित्यद्वारा सगुणब्रह्मस्थानं गच्छन्ति एतद्वै ब्रह्म प्राणानां व्यष्टिसमष्टिरूपाणामायतनं विद्धि त्वं हिरण्यगर्भरूपं वस्तुतस्त्वेतदमृतादिरूपं निर्गुणं सर्व्वाधिष्ठानम्। अतः कार्य्यब्रह्म प्राप्य तत् स्वरूपं निर्गुणं ज्ञात्वा मुच्यन्त इत्यर्थः। अग्निरेव ज्योतिर्देवता एवमहरादयो देवता एव स्मृतौ उक्ता॥ अस्मिन्नुपासके मृते यदि पुत्रादयः शव्यसंस्कारादिकं कुर्व्वन्ति यदि च न कुर्व्वन्ति उभयथाप्युपासकमहिम्ना अर्चिरादिदेवान् क्रमेण गच्छन्ति। अर्चिषमर्चिषोऽहरह्नः शुक्लपक्षं ततः उत्तरायणं तस्मात् संवत्सरं ततो देवलोकं ततो वायुं वायोरादित्यं ततश्चन्द्रं चन्द्राद्विद्युतं गत्वा तत्र विद्यु-

"अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" ॥

इति । सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यते । "अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसम्भवन्ति" इत्युपक्रम्य "आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ, एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति । तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्याऽक्षिस्थानस्य ब्रह्मत्वं निश्चीयते ॥

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

यत्पुनरुक्तं "छायात्मा विज्ञानात्मा देवतात्मा वा स्यादक्षिस्थानः" इति । अत्रोच्यते, न छायात्मादिरितर इह ग्रहणमर्हति । कस्मात् । अनवस्थितेः । न तावत् छायात्मनश्चक्षुषि नित्यमवस्थानं सम्भवति । यदैव हि कश्चित् पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यतेऽपगते तस्मिन्न दृश्यते, "य एषोऽक्षिणि पुरुषः" इति च श्रुतिः सन्निधानात् स्वे चक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति । न चोपासनकाले छायाकरं कञ्चित्पुरुषं चक्षुःसमीपे सन्निधाप्योपास्त इति युक्तं कल्पयितुम् । "अस्यैव शरीरस्य नाशमन्वेष नश्यति" इति

लोकेभ्यस्तानुपासकान् मानवः पुरुषो ब्रह्मलोकादागत्य कार्यब्रह्मलोकं प्रापयति । एषोऽर्चिरादिभिर्देवैर्विशिष्टो देवपथो गन्तव्येन ब्रह्मणा योगाद् ब्रह्मपथश्च । एतेन मार्गेण ब्रह्म प्रतिपद्यमाना उपासका इमं मानवं मनोः सर्गं आवर्तं जन्ममरणावृत्तिरूपं नावर्तन्ते नागच्छन्तीत्यर्थः ।

श्रुतिश्छायात्मनोऽनवस्थितत्वं दर्शयति । असम्भवाच्च । तस्मि-न्नमृतत्वादीनां गुणानां न छायात्मनि प्रतीतिः । तथा विज्ञा-नात्मनोऽपि साधारणे कृत्स्नशरीरेन्द्रियसम्बन्धे सति चक्षुष्ये-वावस्थितत्वं वक्तुं न शक्यम् । ब्रह्मणस्तु सर्वव्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसम्बन्धः । समानश्च विज्ञानात्म-न्यप्यमृतत्वादीनां गुणानामसम्भवः । यद्यपि विज्ञानात्मा पर-मात्मनोऽनन्य एव तथाप्यविद्याकामकर्मकृतं तस्मिन्मर्त्यत्वमध्या-रोपितं भयञ्चेत्यमृतत्वाभयत्वे नोपपद्येते । संयद्वामत्वादयश्चैत-स्मिन्ननैश्वर्य्यादनुपपन्ना एव । देवतात्मनस्तु "रश्मिभिरेषो-ऽस्मिन् प्रतिष्ठितः" इति श्रुतेः यद्यपि चक्षुष्यवस्थानं स्यात् तथाप्यात्मत्वं तावन्न सम्भवति, पराग्रूपत्वात् । अमृतत्वादयोऽपि न सम्भवन्ति, उत्पत्तिप्रलयश्रवणात् । अमरत्वमपि देवानां चिरकालावस्थानापेक्षम् । ऐश्वर्य्यमपि परमेश्वरायत्तं न स्वा-भाविकं, "भीषाऽस्माद्वातः पवते, भीषोदेति सूर्य्यः, भीषाऽस्मा-दग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति मन्त्रवर्णात् । तस्मात्

चक्षुरासीदतीति उपगच्छतीत्यर्थः । अनवस्थितस्योपास्यत्वं सदा न सिद्ध्य-तीति भावः । किञ्चाव्यवधानात् सांनिध्य उपास्य । न च तस्य स्वच-क्षुषा दर्शनं सम्भवतीत्याह ॥ य एष इति ॥ अस्तु तर्हि परेषां दृश्यमान-स्योपास्तिरित्यत आह ॥ न चेति ॥ कल्पनागौरवादित्यर्थः । युक्तिसिद्धा-नवस्थितत्वे श्रुतिमाह ॥ अस्येति ॥ छायाकरस्य बिम्बस्य नाशमदर्शनमनु-सृत्यैव छायात्मा नश्यतीत्यर्थः । जीवं निरस्यति ॥ तथेति ॥ आत्म-व्यवस्थाप्यङ्गनियतविशेषेण जीवस्याभिव्यक्तेश्चक्षुरेव स्थाननियमयुक्तमित्यर्थः ॥ दृष्ट इति ॥ श्रुताविति शेषः । ननु "यतो सूर्योऽभ्युदेति सूर्योऽस्तमेति" इति वाक्यं अमरा देवा इति प्रसिद्धिबाधितमित्याशङ्क्याह ॥ अमरत्वम-पीति ॥ भीषा भयेनास्मादीश्वराद्वायुर्वहति । अग्निश्चेन्द्रश्च स्वस्वकार्य्य

परमेश्वर एवायमक्षिस्थानः प्रत्येतव्यः। अस्मिंश्च पक्षे दृश्यत इति प्रसिद्धवदुपादानं शास्त्रापेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयम्॥

## अन्तर्याम्यधिदैवादिषु, तद्धर्मव्यपदेशात् ॥१८॥

"य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतान्यन्तरो यमयति" इत्युपक्रम्य श्रूयते "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत" इत्यादि। अत्र अधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मञ्च कश्चिदन्तरवस्थितो यमयितान्तर्यामी इति श्रूयते। स किमधिदैवाद्यभिमानी देवतात्मा कश्चित्, किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी, किंवा परमात्मा, किंवाऽर्थान्तरं किञ्चिदित्यपूर्वसंज्ञादर्शनात्

---

कुरुत। उक्तापेक्षया पञ्चमो न्याय्यः समाम्नायुषां निकटे भावतीत्यर्थः। ईश्वरपक्षे दृश्यत इत्ययुक्तं तत्राह॥ अस्मिन्निति॥ दर्शनमनुभवः। तस्य शास्त्रे स्थितस्य शास्त्रमेव करणं कल्प्य सन्निधानात्। तथा च शास्त्रकरणको विद्वदनुभव उपासनास्तुत्यर्थ उच्यत इत्यर्थः। तस्मादुपकोसलविद्यावाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धम्, अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्। बृहदारण्यकवाक्यमुदाहरति॥ य इति॥ अन्तर्यामिब्राह्मणे प्रतीयमानार्थमाह॥ अत्रेति॥ यः पृथिव्यामित्यादिना देवता पृथिव्याद्या अधिकृत्य यमयिता श्रूयते। तथा यः सर्वेषु लोकेष्विति अधिलोकं। यः सर्वेषु वेदेष्वित्यधिवेदं। यः सर्वेषु यज्ञेष्विति अधियज्ञम्। यः सर्वेषु भूतेष्वित्यधिभूतम्। यः प्राणे तिष्ठन्नित्यादि य आत्मनीत्यन्तमध्यात्ममिति विभागः। अशरीरस्य नियन्तृत्वसम्भवासम्भवाभ्यां संशयः। पूर्वत्रेश्वरस्याक्षिस्थानत्वसिद्धये पृथिव्यादिस्थाननिर्देशो दृष्टान्त उक्तस्तस्य दृष्टान्तवाक्यस्येश्वरपरत्वमत्राभिधाय समाधीयत

संशयः । किं तावन्नः प्रतिभाति, संज्ञाया अप्रसिद्धत्वात् संज्ञि-नाप्यप्रसिद्धेनार्थान्तरेण केनचित् भवितव्यमिति, अथ वा नानिरूपितरूपमर्थान्तरं शक्यमस्तीत्यभ्युपगन्तुम् । अन्तर्य्यामिशब्दश्चान्तर्यमणयोगेन प्रवृत्तो नात्यन्तमप्रसिद्धः । तस्मात् पृथिव्याद्यभिमानी कश्चिद्देवोऽन्तर्य्यामी स्यात् । तथा च श्रूयते "पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः" इत्यादि । स च कार्य्यकरणवत्त्वात् पृथिव्यादीनन्तस्तिष्ठन् यमयतीति युक्तं देवतात्मनो यमयितृत्वम् । योगिनो वा कस्यचित् सिद्धस्य सर्व्वानुप्रवेशेन यमयितृत्वं स्यात् । न तु परमात्मा प्रतीयेत, अकार्य्यकरणवत्त्वादित्येवं प्राप्त इदमुच्यते । योऽन्तर्य्याम्यधि-दैवादिषु श्रूयते, स परमात्मैव स्यान्नान्य इति । कुतः । त-द्धर्मव्यपदेशात् । तस्य हि परमात्मनो धर्म्मा इह निर्दिश्यमाना दृश्यन्ते । पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकार-जातमन्तस्तिष्ठन् यमयतीति परमात्मनो यमयितृत्वं धर्म उप-पद्यते, सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः । "एष त

---

इत्याक्षेपसङ्गतिः, अत पूर्व्वफलेनाख्ये फलवत्त्वं । अवान्तरफलन्तु पूर्वपक्षे अनीश्वरोपास्तिः सिद्धान्ते प्रत्यग्ब्रह्मज्ञानमिति मन्तव्यम् । स्वयमेवारुचि वदन् पक्षान्तरमाह ॥ अथ वेति ॥ अनिश्चितार्थे फलाभावेनाफलस्य वेदार्थत्वायोगादिति भावः । तथा च श्रूयते यस्य देवस्य यतनं शरीरं लोक्यतेऽनेनेति लोकश्चक्षुर्ज्योतिः सर्व्वार्थप्रकाशकं मन इत्यर्थः । उपक्रमादिनाऽन्तर्य्यामिकानिश्चयादनेकदेवपक्षो न युक्त इत्यरुचेराह ॥ योगिनो वेति ॥ आगन्तुकसिद्धस्य नियामकत्वे सिद्धसाधनकल्पनागौरवान्नित्यसिद्ध एवान्तर्य्यामीति सिद्धान्तयति ॥ एवं प्राप्त इति ॥ देवतानिरासे हेत्वन्तरमाह ॥ स पृथिवीति ॥ ईश्वरो न नियन्ता अशरीरत्वात् मुक्तवदित्युक्तं निरस्यति ॥

आत्मान्तर्याम्यमृतः” इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते। “यं पृथिवी न वेद” इति च पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन् देवतात्मनोऽन्यमन्तर्यामिणं दर्शयति, पृथिवीदेवता ह्यहमस्मि पृथिवीत्यात्मानं विजानीयात्। तथा “अदृष्टोऽश्रुतः” इत्यादिव्यपदेशो रूपादिविहीनत्वात् परमात्मन उपपद्यत इति। यत्तु कार्य्यकरणहीनस्य परमात्मनो यमयितृत्वं नोपपद्यत इति, नैष दोषः, यान्नियच्छति तत्कार्य्यकरणैरेव तस्य कार्य्यकरणवत्त्वोपपत्तेः। तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न सम्भवति भेदाभावात्। भेदे हि सत्यनवस्थादोषोपपत्तिः। तस्मात् परमात्मैवान्तर्यामी॥

## न च स्मार्त्तमतद्धर्माभिलापात्॥१९॥

स्यादेतदहृष्टत्वादयो धर्म्माः साङ्ख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यन्ते, रूपादिहीनतया तस्य तैरभ्युपगमात्। “अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः” इति हि स्मरन्ति। तस्यापि

---

नैष दोष इति॥ नियन्तृव्यतिरिक्तशरीरशून्यत्वं वा हेतुः शरीरासम्बन्धित्वं वा। आद्ये स्वदेहनियन्तरि जीवे व्यभिचारः द्वितीयस्त्वसिद्धः। ईश्वरस्य स्वाविद्योपार्जितसर्व्वसम्बन्धित्वादित्याह॥ यान्नियच्छतीति॥ सशरीरो नियन्तेति लोकदृष्टिमनुसृत्यैतदुक्तम्। वस्तुतस्तु चेतनसान्निध्यात् तस्य व्यापारो नियमनं तच्छक्तिमत्त्वं नियन्तृत्वं। तच्चाचिन्त्यमायाशक्तेश्चिदात्मनः शरीरं विनैवोपपन्नं। कार्य्यकरणसङ्घातात्मको देहो ग्राह्यः तेन लिङ्गदेहस्य व्यावृत्तिः। ननु देहनियन्तुर्जीवस्यान्यो नियन्ता चेत् तस्याप्यन्य, इत आह॥ इत्यनवस्थेति॥ निरङ्कुशं सर्व्वनियन्तृत्वमीश्वरस्य श्रुतं। तस्यानियन्त्रन्तरानुमाने श्रुतिबाध इति नानवस्थेत्यर्थः। यद्वा ईश्वरान्तरकल्पनया जीवस्य नियन्तृत्वोक्तौ। मिथोभेदाभावान्नानवस्थेत्यर्थः।

नियन्तृत्वं सर्वविकारकारणत्वादुपपद्यते। तस्मात्प्रधानमन्तर्यामिशब्दं स्यात्, ईक्षतेर्नाशब्दमित्यत्र निराकृतमपि सत् प्रधानमिहादृष्टत्वादिव्यपदेशसम्भवेन पुनराशङ्क्यते। तत उत्तरमुच्यते। न च स्मार्त्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति। कस्मात्। अतद्धर्माभिलापात्। यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य सम्भवति, तथापि न द्रष्टृत्वादिव्यपदेशः सम्भवति, प्रधानस्याचेतनत्वेन तैरभ्युपगमात्। "अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता" इति हि वाक्यशेष इह भवति। आत्मत्वमपि न प्रधानस्योपपद्यते। यदि प्रधानमात्मत्व द्रष्टृत्वाद्यसम्भवान्नान्तर्याम्यभ्युपगम्यते, शारीरस्तर्ह्यन्तर्यामी भवतु। शारीरो हि चेतनत्वाद् द्रष्टा श्रोता मन्ता विज्ञाता च भवत्यात्मा च प्रत्यक्त्वात्, अमृतश्च धर्माधर्मफलोपभोगोपपत्तेः। अदृष्टत्वादयश्च धर्माः शारीरे सुप्रसिद्धाः, दर्शनादिक्रियायाः कर्त्तरि प्रवृत्तिविरोधात्। "न दृष्टेर्द्रष्टारं पश्येत्" इत्यादिश्रुतिभ्यश्च। तस्य च कार्य्यकरणसङ्घातमन्तर्यमितुं शीलं भोक्तृत्वात्। तस्माच्छारीरोऽन्तर्यामीति अत उत्तरं पठति।

प्रधानं महदादिक्रमेण कथं प्रवर्त्तत इति तर्कस्याविषय इत्याह ॥ अप्रतर्क्यमिति ॥ रूपादिहीनत्वादविषयं सर्वतो दिक्षु प्रसुप्तमिव तिष्ठति जडत्वादित्यर्थः । अतत्, अप्रधानं चेतनं तस्य धर्म्माणामभिधानादिति हेत्वर्थः । उत्तरसूत्रं निरस्याशङ्कामाह ॥ यदि प्रधानमित्यादिना ॥ अमृतश्चेति ॥ विनाशिनो देहान्तरभोगानुपपत्तेरित्यर्थः । यथा देवदत्तकर्तृकगमनक्रियायाः ग्राम कर्म्म न देवदत्तस्तथात्मकर्तृकादर्शनादिक्रियाया अनात्मा विषयः न त्वात्मा क्रियायाः कर्तृविषयत्वायोगादित्याह ॥

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥

नेति पूर्वसूत्रादनुवर्तते, शारीरश्च नान्तर्यामी स्यात् । यद्यपि द्रष्टृत्वादयो धर्मास्तस्य सम्भवन्ति तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वान्न स कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च शक्नोति । अपि च । उभयेऽपि हि शाखिनः काण्वा माध्यन्दिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते । "यो विज्ञाने तिष्ठन्" इति काण्वाः । "य आत्मनि तिष्ठन्" इति माध्यन्दिनाः । य आत्मनि तिष्ठन्नित्यस्मिंस्तावत् पाठे भवत्यात्मशब्दः शारीरस्य वाचकः । यो विज्ञाने तिष्ठन्नित्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते, विज्ञानमयो हि शारीर इति । तस्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम् । कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते । यश्चायमीश्वरोऽन्तर्यामी यश्चायमितरः शारीरः । का पुनरिहानुपपत्तिः । "नान्योऽतोऽस्ति द्रष्टा"

---

कर्मेति ॥ क्रियायां गुणः कर्ता प्रधानं कर्म तयोरेकस्यां क्रियायामेकस्य गुणत्वप्रधानत्वयोर्विरोधान्न कर्तुः कर्मत्वमित्यर्थः । दृष्टेर्द्रष्टारमात्मानं तया दृष्ट्या द्रष्टा न विषयीकुर्यादित्यादिश्रुतेश्चादृष्टत्वादिधर्मा शारीरस्येत्याह ॥ नेति ॥ अपिशब्दसूचितहेतुमुक्त्वा पाठोक्तं हेतुमाह ॥ अपि चोभयेऽपीति ॥ भेदेनेति सूत्रात् तात्त्विकभेदे भ्रान्तिं निरसितुं शङ्कते ॥ कथमिति ॥ नन्वेको भोक्ता जीव ईश्वरस्त्वभोक्तेति न विरोध इति शङ्कते ॥ का पुनरिति ॥ तयोर्भेदः श्रुतिविरुद्ध इति पूर्ववाद्याह ॥ नान्य इति ॥ स एव श्रुत्यर्थमाह ॥ अत्रेति श्रुतेरर्थान्तरमाशङ्क्य निषेधति ॥ नियन्त्रन्तरेत्यादिना ॥ न ह्येतत्प्रसक्तप्रतिषेधः, किन्त्वविशेषेण द्रष्ट्रन्तरनिषेधश्रुतेरन्तर्याम्यन्तरनिषेधार्थत्वे बाधकं स्यादिति ॥ अविद्येति ॥ तस्मात् सूत्रे य आत्मनि तिष्ठन्निति श्रुतौ च द्रष्टृभेदोक्तिरयुक्ता । नान्य

इत्यादिश्रुतिवचनं विरुध्येत । अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं श्रोतारं मन्तारं विज्ञातारं चात्मानं प्रतिषेधति । नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमिति चेत्, न, नियन्त्रन्तराप्रसङ्गात्, अविशेषश्रवणाच्च । अत्रोच्यते । अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः । एको हि प्रत्यगात्मा भवति, न द्वौ प्रत्यगात्मानौ सम्भवतः । एकस्यैव तु भेदव्यवहार उपाधिकृतः, यथा घटाकाशो महाकाश इति । ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रञ्चेति सर्वमेतदुपपद्यते । तथा च श्रुतिः "यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति" इत्यविद्याविषये सर्वव्यवहारं दर्शयति । "यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येत्" इति विद्याविषये सर्वव्यवहारं वारयति ।

इति वाक्यशेषे भेदनिरासादिति । आत्मभेद उपाधिकल्पितः श्रुतिसूत्राभ्यामनूद्यत इति समाधत्ते ॥ अत्रोच्यत इति ॥ भेदः सत्यः किं न स्यादत आह ॥ एको हीति ॥ गौरवेण द्वयोरहन्धीगोचरत्वासम्भवादेक एव तद्गोचरः तदगोचरस्य घटवदनात्मत्वमात्मभेदः सत्य इत्यर्थः ॥ ततश्चेति ॥ कल्पितभेदाङ्गीकाराद्भेदापेक्षं सर्वं युज्यत इत्यर्थः । तस्माद्दन्तर्यामिब्राह्मणस्थे ये ब्रह्मणि समन्वितमिति सिद्धम् । अदृश्यत्वादिगुणको धर्मोक्तेः । सूत्रस्थवाक्यमुदाहरति ॥ अथेति ॥ कर्मविद्याप्रकरणापरविद्योपन्यासानन्तरं यया निर्गुणं ज्ञायते परा सोच्यते तामेव विषयोक्त्या निर्दिशति ॥ यत्तदिति ॥ अद्रेश्यमदृश्यं ज्ञानेन्द्रियैः अग्राह्यं कर्मेन्द्रियैश्च । गोत्रं वंशः । वर्णो ब्राह्मणत्वादिर्जातिः । चक्षुःश्रोत्रशून्यमचक्षुःश्रोत्रम् ।

**अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥**

"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यम-गोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इति श्रूयते। तत्र संशयः। किमयमद्रेश्यत्वादिगुणको भूतयोनिः प्रधानं स्यात्, उत शारीरः, आहोस्वित् परमेश्वर इति। तत्र प्रधान-मचेतनं भूतयोनिरिति युक्तम् अचेतनानामेव तस्य दृष्टान्तत्वे-नोपादानात् "यथोर्णनाभिः सृज्यते गृह्णते च, यथा पृथिव्या-मोषधयः सम्भवन्ति। यथा सतः पुरुषात् केशलोमानि तथाऽक्ष-रात् सम्भवतीह विश्वम्" इति। नन्वूर्णनाभिः पुरुषश्चेतना-विह दृष्टान्तत्वेनोपात्तौ, नेति ब्रूमः, न हि केवलस्य चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वञ्चास्ति। चेतनाधिष्ठितं ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः पुरुषशरीरञ्च केश-लोम्नामिति प्रसिद्धम्। अपि च पूर्वत्राद्रष्टृत्वाद्यभिलापसम्भवेऽपि द्रष्टृत्वाद्यभिलापासम्भवात् न प्रधानमभ्युपगतम्। इह त्वद्रेश्य-

पाणिपादम्-अपाणिपादं ज्ञानकर्मेन्द्रियविकलमित्यर्थः। विभु प्रभु सुसूक्ष्मं दुर्ज्ञेयत्वात् नित्याव्ययपदाभ्यां नाशापक्षययोर्निरासः। भूतानां योनिं प्रकृतिं यत् पश्यन्ति धीराः, परा अक्षरादक्षरं तद्विद्यापरेत्यन्वयः॥ अदृश्यत्वादिगुणानां प्रकृतिप्रधानसाधारणत्वात् संशयः। पूर्ववद् द्रष्टृत्वा-दीनां चेतनधर्माणामश्रुतेः। अतः प्रधानमिति प्रत्युदाहरणेन पूर्व-पक्षयति॥ तत्रेति॥ पूर्वपक्षे प्रधानाद्युपास्ति सिद्धान्ते निर्गुणधीरिति फलं। ऊर्णनाभिर्लूताकीटः तन्तून् स्वदेहात् सृजति उपसंहरति चेत्यर्थः। सतो जीवतः। ननु पूर्वं निरस्तं प्रधानं कथमुत्थाप्यते तत्राह॥

त्वादयो धर्माः प्रधाने सम्भवन्ति, न चात्र विरुध्यमानो धर्मः कश्चिदभिलप्यते। ननु "यः सर्वज्ञः सर्ववित्" इत्ययं वाक्यशेषो ऽचेतने प्रधाने न सम्भवति। कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति। अत्रोच्यते। "यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्" इत्यक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनः श्रावयिष्यति "अक्षरात्परतः परः" इति। तत्र यः परोऽक्षरात् श्रुतः, स सर्वज्ञः सर्ववित् सम्भविष्यति, प्रधानमेव त्वक्षरशब्दनिर्दिष्टं भूतयोनिः। यदा तु योनिशब्दो निमित्तवाची, तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्यां भूतजातस्योपार्जनादिति। एवं प्राप्तेऽभिधीयते, योऽयमदृश्यत्वादिगुणको भूतयोनिः, स परमेश्वर एव स्यान्नान्य इति। कथमेतदवगम्यते। धर्मोक्तेः। परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते "यः सर्वज्ञः सर्ववित्" इति। न हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्त्वं वा सम्भवति। नन्वक्षरशब्दनिर्दिष्टाद् भूतयोनेः परस्यैवैतत् सर्वज्ञत्वं सर्ववित्त्वञ्च न

अपि चेति ॥ अत्र प्रधाने विरुध्यमानोऽसम्भावितो वाक्यशेष श्रुत इति शङ्कते ॥ ननु य इति ॥ पञ्चम्यन्ताक्षरश्रुत्या भूतप्रकृतेः प्रत्यभिज्ञानात् प्रधानात्परपदोक्तस्य जगन्निमित्तेश्वरस्य सर्वज्ञत्वादिकमित्याह ॥ अत्रोच्यत इति ॥ सन्दिग्धे तु वाक्यशेषादिति न्यायेन सिद्धान्तयति ॥ एवं प्राप्त इति ॥ चेतनाचेतनत्वेन सन्दिग्धे भूतयोनौ यः सर्वज्ञ इति वाक्यशेषादीश्वरत्वनिर्णय इत्ययुक्तं वाक्यशेषे भूतयोनेः प्रत्यभिज्ञापकाभावादिति शङ्कते ॥ नन्विति ॥ जनिकर्तुः प्रकृतिरिति सूत्रेण प्रकृतेरुपादान-भूतायां पञ्चमी यस्मादक्षरात् सम्भवतीति प्रकृतित्वेनोक्ताक्षरस्य भूत-

अपि चात्र "द्वे विद्ये वेदितव्ये उक्ते परा चैवापरा च" इति। तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा ब्रवीति "अथ परा यया तदक्षरमधिगम्यते" इत्यादि। तत्र परस्या विद्याया विषयत्वेनाक्षरं श्रुतम्। यदि पुनः परमेश्वरादन्यदद्रेश्यत्वादिगुणकमक्षरं परिकल्प्येत, नेयं परा विद्या स्यात्। परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते। न च प्रधानविद्या निःश्रेयसफला केनचिदभ्युपगम्यते। तिस्रश्च विद्याः प्रतिज्ञायेरन् त्वत्पक्षेऽक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात्। द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति चैकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्पते, नाचेतनमात्रैकायतने प्रधाने, भोग्यव्यतिरिक्ते वा भो-

ऽपि कारणविषयत्वात् परेत्यत आह॥ परापरविभागो हीति॥ अनित्यफलत्वेनापरविद्यां निन्दित्वा मुमुक्षार्थिने ब्रह्मविद्यां प्रोवाचेति वाक्यशेषोक्तेरित्यर्थः। अस्तु प्रधानविद्याऽपि मुक्तिफलत्वेन परेत्यत आह॥ न चेति॥ ननु यः सर्वज्ञ इत्यग्रे परविद्याविषय उच्यते, अद्रेश्यवाक्येन तु प्रधानविद्योच्यत इत्यत आह। तिस्रश्चेति॥ इतश्च भूतयोनेर्ब्रह्मत्वमित्याह। कस्मिन्निति॥ अचेतनमात्रस्यैकायतनमुपादानं तज्ज्ञानात् कार्यग्रामेऽपि तदकार्याणामात्मनां ज्ञानं न भवति। एवं जीवे ज्ञाते तदकार्यस्य भोग्यस्य ज्ञानं न भवतीत्यर्थः। ब्रह्मविद्याशब्दाच्च भूतयोनिर्ब्रह्मेत्याह॥ अपि चेति॥ स ब्रह्मविद्यां सर्वविद्यानां प्रतिष्ठां समाप्तिभूमिं ब्रह्मविद्यास्तवाय। ब्रह्मणि सर्ववेद्यानां विद्याफलानां चान्तर्भावाद् ब्रह्मविद्या सर्वविद्याप्रतिष्ठा। नन्वपरविद्यापरप्रकरणे किमर्थमुक्तेत्यत आह॥ अपरेति॥ प्लवन्ते गच्छन्तीति प्लवा विनाशिनः। अदृढा नित्य-

क्षरि। अपि च "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्व्वाय ज्येष्ठाय पुत्त्राय प्राह" इति। ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यामक्षराधिगमनीं दर्शयंस्तस्या ब्रह्मविद्यात्वं दर्शयति। सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्याक्षरस्याब्रह्मत्वे बाधिता स्यात्। अपरा ऋग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रम उपन्यस्यते ब्रह्मविद्याप्रशंसायै, प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म एतत् श्रेयो येऽभिनन्दन्ति मूढा जरां मृत्युं ते पुनरेवापि यन्ति" इत्येवमादिनिन्दावचनात्। निन्दित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति "परीक्ष्य लोकान् कर्म्मचितान् ब्राह्मणोऽपि निर्वेदमायान्नास्त्यकृतः कृतेन, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति। यत्तूक्तमचेतनानां पृथिव्यादीनां दृष्टान्तत्वेनोपादानं दार्ष्टान्तिकेनाप्यचेतनेनैव भूतयोनिना भवितव्यमिति, तदयुक्तम्। न हि दृष्टान्तदार्ष्टा-

फलसम्बन्धादनाश्रका षोडशर्त्विजः पत्नी यजमानश्चेत्यष्टादश। यज्ञेन नामनिमित्तेन निरूप्यन्त इति यज्ञरूपाः। तथा हि ऋतुषु याजयन्ति यज्ञं कारयन्तीत्यृत्विजः, यजत इति यजमानः, पत्युर्नो यज्ञसंयोग इति सूत्रेण पतिशब्दस्य नकारान्तादेशो यज्ञसम्बन्धे विहित इति पत्नी, एवमृत्विगादिनामप्रवृत्तिनिमित्तं यज्ञ इति यज्ञरूपाः येष्ववरमनित्यफलकं कर्म्मं युक्तम् एतदेव कर्म्म श्रेयो नान्यदात्मज्ञानमिति ये मूढास्तुष्यन्ति ते पुनर्जन्ममरणं प्रयान्तीत्यर्थः। तद्विज्ञानार्थं ब्रह्मज्ञानार्थं गुरुमभिगच्छेदेवेति नियमः। ब्रह्मनिष्ठस्याप्यनधीतवेदस्य गुरुत्वं वारयति॥

न्तिकयोरत्यन्तसाम्येन भवितव्यमिति नियमोऽस्ति। अपि च स्थूलाः पृथिव्यादयो दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगम्यते, तस्मादृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव॥

## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॥२२॥

इतश्च परमेश्वर एव भूतयोनिः, नेतरौ शारीरः प्रधानं वा। कस्मात्। विशेषणभेदव्यपदेशाभ्याम्। विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन 'दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रः'' इति। न ह्येतद्दिव्यत्वादिविशेषणमविद्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनः तद्धर्मांश्च स्वात्मनि कल्पयतः शारीरस्योपपद्यते। तस्मात् साक्षादौपनिषदः पुरुष इहोच्यते। तथा प्रधानादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति "अक्षरात्परतः परः" इति।

ऽस्ति नियमिति॥ कार्य्यमुपादानाभिन्नमित्यर्थे दृष्टान्तः। सर्वसाम्ये तत्त्वाद्यमिष्टापत्तेरित्यर्थः॥ अपि च स्थूला इति॥ विशेषणाच्च जीवो भेदोक्तेश्च प्रधानमिति हेतुद्वयं विभज्य व्याचष्टे॥ विशिनष्टि हीत्यादिना॥ दिव्यो द्योतनात्मकः स्वयंज्योतिरमूर्त्तः पूर्णः पुरुषः पुरिशयः प्रत्यगात्मा बाह्यं स्थूलमाभ्यन्तरं सकारणं सूक्ष्मं ताभ्यां सहाधिष्ठानत्वेन तिष्ठति स बाह्याभ्यन्तरः, हि तथा श्रुतिषु प्रसिद्ध इत्यर्थः। अविद्याकृतं नामरूपात्मकं शरीरं तेन परिच्छेदोऽल्पत्वम्। तस्य शारीरस्य धर्मान् जाड्यमूर्त्तत्वादीनित्यर्थः। तत्राक्षरशब्देन प्रधानोक्तावक्षरस्य प्रधानस्य प्रतिष्ठानमाश्रयेत। तस्मात्। अक्षरतव्याकृतमिति॥ अश्नोति व्याप्नोति स्वविकार

अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं, सर्वस्माद्धि विकारात्परो योऽविकारः, तस्मात् परतः पर इति भेदेन व्यपदेशात् परमात्मानमिह विवक्षितं दर्शयति। नात्र प्रधानं नाम किञ्चित् स्वतन्त्रं तत्त्वमभ्युपगम्य तस्माद्भेदव्यपदेश उच्यते। किं तर्हि यदि प्रधानमपि कल्प्य

---

जानीत्यक्षरम्। अव्याकृतमकृतमनादीति यावत्। नामरूपयोर्बीजमीश्वरस्तस्य शक्तिरूपं परतन्त्रत्वादुपादानमपि शक्तिरित्युक्तम्। भूतानां सूक्ष्मावस्था यत्र तद्भूतसूक्ष्मम्। ईश्वरश्चिन्मात्रमाश्रयो यस्य तत्तथा। तस्यैव चिन्मात्रस्य जीवेश्वरभेदोपाधिभूतं यत्तु ईश्वर आश्रयो विषयो यस्येति नानाजीववादिना व्याख्यानं तद्भाष्ये बहिर्भूतम्। एतस्मिन्नु खल्वक्षरे आकाश ओतश्च प्रोतश्चेत्योतप्रोतभावेनाव्याकृतस्य चिदाश्रयत्वश्रुतेः, आश्रयपदलक्षणाया निर्मूलत्वात्। न हि मूलप्रकृतेर्भेदे किञ्चिन्मानमस्ति। न च "इन्द्रो मायाभिः" इति श्रुतिर्मानम्। "अजामेका" इत्याद्यनेकश्रुतिबलेन लाघवतर्कसहायेन तस्याः श्रुतेर्बुद्धिभेदेन मायाभेदानुवादित्वात्। तदुक्तं सुरेश्वराचार्यैः "स्वतस्त्वविद्याभेदोऽत्र मनागपि न विद्यते" इति। साङ्ख्ययोगाचार्याः पुराणेतिहासकर्तारश्च मूलप्रकृत्यैक्यं वदन्ति। नन्वविद्यैक्ये बन्धमुक्तिव्यवस्था कथम्। न च व्यवस्था नास्तीति वाच्यं श्रवणे प्रवृत्त्यादिबाधापातादिति चेत्। उच्यते। ये ह्यविद्यानानात्वमिच्छन्ति तैरपि परिणामित्वेन सांशत्वमविद्याया अङ्गीकार्यं, तथा चानयोरात्मनः स्वीयसूक्ष्मात्मना परिणता विद्यांशोपहितजीवभेदाद्व्यवस्था सिध्यति। यस्य ज्ञानमन्तःकरणे जायते तस्यान्तःकरणपरिणामव्याप्ताज्ञानांशनाशो मुक्तिरिति। एवञ्च श्रोतुः स्वरूपानन्दमात्रं श्रवणादौ प्रवृत्तिर्विद्वदनुभवो जीवन्मुक्तिशास्त्रं चेति सर्वमबाधितं भवति। न चैवं नानाजीवपक्षादविशेषः मूलप्रकृतिनानात्वाभावादित्यलं परत्वे हेतुः॥ अविकार इति॥ ननु सूत्रकृता श्रुतौ प्राधान्याद्भेदव्यपदेश उक्तस्तत्र कथमप्रधानाद्भेदोक्तिर्व्याख्यायते तत्राह॥ नात्रेति॥ कार्यस्य प्रधो-

मान श्रुत्यविरोधेनाव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्पयेत, कल्प्यताम्। तस्माद्भेदव्यपदेश इति, परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते। कुतश्च परमेश्वरो भूतयोनिः।

रूपोपन्यासाच्च ॥ २३ ॥

अपि च "अक्षरात्परतः परः" इत्यस्यानन्तरम् "एतस्माज्जायते प्राणः" इति प्राणप्रभृतीनां पृथिवीपर्य्यन्तानां तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः। "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्य्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति। तच्च परमेश्वरस्यैवोचितं सर्वविकारकारणत्वात्, न शारीरस्य तनुमहिम्नो, नापि प्रधानस्यायं रूपोपन्यासः सम्भवति सर्वभूतान्तरात्मत्वासम्भवात्, तस्मात् परमेश्वर एव भूतयोनिर्नेतराविति गम्यते। कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते। प्रकरणात्। "एष" इति च प्रकृतानुकर्षणाद्, भूतयोनिं हि प्रकृत्य "एतस्माज्जायते प्राण एष सर्वभूतान्तरात्मा" इत्यादि वचनं भूतयोनिविषयमेव भवति। यथोपाध्यायं प्रकृत्य "एतस्मादधीष्व एष वेदवेदाङ्गपारगः" इति वचनम् उपाध्यायविषयं भवति तद्वत्।

यत इति प्रधानमज्ञानमेव। ततोऽन्यस्याप्रामाणिकत्वादित्यर्थः। अतोऽज्ञानमेव भूतयोनिरिति पूर्वपक्षं कृत्वा निरस्यते। तद्विरोधेनार्थात् साङ्ख्यकल्पितप्रधाननिरास इति मन्तव्यम्। इत्यिवक्षितेनादौ सूत्रं व्याचष्टे ॥ अपि चेत्यादिना ॥ "प्राणो मम सर्वेन्द्रियाणि च स वायुश्चेति-

कथं पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं सम्भवति। सर्वात्मत्वविवक्षयेदमुच्यते, न तु विग्रहवत्त्वविवक्षयेत्यदोषः। "अहमन्नमहमन्नमहमन्नम्। अहमन्नादः" इत्यादिवत्। अन्ये पुनर्मन्यन्ते, नायं भूतयोनेरूपोपन्यासः जायमानत्वेनोपन्यासात् "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति हि पूर्वत्र प्राणादिपृथिव्यन्तं तत्त्वजातं जायमानत्वेन निरदिक्षत्। उत्तरत्रापि च 'तस्मादग्निः समिधो यस्य सूर्यः" इत्येवमादि, अतश्च "सर्वा ओषधयो रसाश्चेत्येवमन्तं जायमानत्वेनैव निर्देक्ष्यति। इहैव कथमकस्मादन्तराले भूतयोनेरूपमुपन्यस्येत। सर्वात्मत्वमपि सृष्टिं परिसमाप्योपदेक्ष्यति 'पुरुष एवेदं विश्वं कर्म" इत्यादिना। श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेर्जन्म निर्दिश्यमानमुपलभामहे "हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्, स दधार पृथिवीं द्यामुतेमां, कस्मै देवाय हविषा विधेम" इति समवर्त्ततेत्यजायत इत्यर्थः। तथा स वै शरीरी प्रथमः स वै पुरुष उच्यते,

राप: पृथिवी" इति श्रुतिः। "अग्निर्द्युलोकः, असौ वाव लोको गौतमाग्निः" इति श्रुतेः। विवृता वेदा वागित्यन्वयः। पद्भ्यां पादावित्यर्थः। यस्येदं रूपं स एष सर्वप्राणिनामन्तरात्मेत्यर्थः। ननु महिम्न इति अल्पपक्षेरित्यर्थः। यथा कश्चित् ब्रह्मवित् स्वस्य सर्वात्मत्वप्रकटनार्थमहमन्नमिति साम गायति न त्वन्नत्वादिकमात्मनो विवक्षति। अफलत्वात्, तथेहापीत्याह॥ अहमन्नमिति॥ हस्तकराभ्यां दूषयति॥ अन्ये पुनरिति॥ एष सर्वभूतान्तरात्मा सूत्रात्मा एतस्माद्भूतयोनेर्जायत इति श्रुत्यन्वयेन हिरण्यगर्भस्यात्र जायमानत्वेनोपन्यासादित्यर्थः। निरदिक्ष-

आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत" ॥ इति ।

विकारपुरुषस्यापि सर्वभूतान्तरात्मत्वं सम्भवति, प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात् । अस्मिन् पक्षे "पुरुष एवेदं विश्वं कर्म" इत्यादिसर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयम् ॥

## वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

"को न आत्मा किं ब्रह्मेति आत्मानमेवेमं वैश्वानरं सम्प्रत्य-

दवोचदित्यर्थः । अग्निर्द्युलोको यस्य समिदुप सूर्यः सोऽपि द्युलोकाग्निस्तस्मादजायतेत्यर्थः । "तस्यादित्य एव समित्" इति श्रुत्यन्तरात् । अतो मध्येऽपि सृष्टिरेव वाच्या न रूपमिति भावः । यदुक्तमग्निर्मूर्द्धेत्यत्र भूतयोनेः सर्वात्मत्वं विवक्षितमिति तत्रेत्याह ॥ सर्वात्मत्वमपीति ॥ ननु हिरण्यगर्भस्य जन्माश्रवणात्तदुक्तं कथमवक्तव्यं तत्राह ॥ श्रुतीति ॥ अग्रे समवर्त्तत जातः स भूतस्य जातस्य पतिरीश्वरप्रसादादभवत् स सूत्रात्मा द्यामिमां पृथिवीञ्च स्थूलं सर्वमधारयत कशब्दस्य प्रजापतिः स्वात्मत्वे सर्वनामत्वाभावेन स्मा इत्ययोगादेकारलोपेनैकस्मै देवाय प्राणात्मने हविषा विधेम परिचरेमेति व्याख्येयम् । 'कतमः स एको देव इति प्राणः" इति श्रुतेः । यद्वा यस्मादयं जातस्तस्मा एकस्मै देवायेत्यर्थः । 'एको देवः सर्वभूतेषु गूढः" इति श्रुत्यन्तरात् । ननु तस्य भूतान्तरात्मत्वं कथं । तत्राह ॥ विकारेति ॥ पूर्वकल्पे प्रकृष्टोपासनाकर्मसमुच्चयानुष्ठानादस्मिन् कल्पे सर्वप्राणिव्यष्टिलिङ्गात्मा व्यापकः सर्वप्राण्यन्तर्गतः स्वकर्मेन्द्रियप्राणात्मकसमष्टिलिङ्गशरीरः जायते तद्रूपस्य सूत्रात्मनः सर्वभूतान्तरात्मत्वं युक्तमित्यर्थः । स्वपक्षे सूत्रार्थमाह ॥ अस्मिन् पक्ष इति ॥ कर्म सफलं सर्वं श्रौतस्मार्त्तादिकं तपश्च पुरुष एवेति सर्वान्तरत्वरूपोपन्यासाच्च भूतयोनौ प्रथमे वाक्यं समन्वितमित्यर्थः ॥ वैश्वानरः ॥ छान्दोग्यमुदाहरति ॥ को न इति ॥ प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनकबुडिला मिलित्वा मीमांसाञ्चक्रुः को न आत्मा किं ब्रह्मेति । आत्मैव ब्रह्मेति ज्ञापनार्थं 'पद-

ध्येषि तमेव नो ब्रूहीति" इति चोपक्रम्य द्युसूर्यवाय्वाकाशवारि-पृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च वैश्वा-नरं प्रत्येषां मूर्धादिभावमुपदिश्याम्नायते "यस्त्वेतमेवं प्रादेश-मात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा

---

इय। ते पञ्चापि निश्चयार्थमुद्दालकमाजग्मुः। सोऽपि सम्यङ् न वेदेति तेनोद्दालकेन सह षडप्यश्वपतिं कैकेयं राजानमागत्योचुः आत्मानमिति अध्येषि स्मरसि तमेव नो ब्रूहीति। राजा तु तेषां भ्रान्तिनिरासाय तान् प्रत्येकमपृच्छत्। कं त्वमात्मानमुपास्स इति। ते च प्राचीनशाला-दयः क्रमेण तं प्रत्येकमूचुः। दिवमेवाहं वैश्वानरं वेद्मि। आदित्यमेवाहं वेद्मि। वायुमेव। आकाशमेव। अप एव पृथिवीमेवाहं वेद्मीति। ततो राजा द्युसूर्यादीनां वक्ष्य यथाक्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्व-बहुलत्वरयित्वप्रतिष्ठात्वगुणान् विधाय भवन्तो यदि मामपृष्ट्वा द्युसूर्या-दिषु भगवतो वैश्वानरस्याङ्गेष्वेव प्रत्येकं वैश्वानरत्वदृष्टयो भवेयुस्तदा क्रमेण मूर्धपातान्धत्वप्राणोत्क्रमणदेहविशीर्णत्वबस्तिभेदपादशोषा भवतां स्युरिति प्रत्येकोपासनं निन्दित्वा सुतेजस्त्वगुणको द्युलोकोऽस्यात्मनो वैश्वानरस्य मूर्धा विश्वरूपत्वगुणकः सूर्यो यस्य चक्षुरित्येवं द्युसूर्यादीनां मूर्धादि-भावमुपदिश्य समस्तवैश्वानरध्यानविधिराम्नायते ॥ यस्त्वेतमिति ॥ आभि-मुख्येनापरोक्षतया विश्वं विमिमीते जानातीत्यभिविमानः। तं सर्वज्ञं तदुपासकः सर्वत्र भोग्यं भुङ्क्त इत्यर्थः। लोका भूरादयो भूतानि शरी-राण्यात्मानो जीवा इति भेदः। शुभं तेजः कान्तिर्यस्य द्युलोकस्य स सुतेजाः विश्वानि रूपाणि यस्य सूर्यस्य। "एष शुक्ल एष नील" इति श्रुतेः। पृथक् नानाविधं वर्त्म गमनमात्मा स्वभावो यस्य वायोः स नाना-गतित्वगुणकोऽस्य प्राणः बहुलत्वं व्यापित्वं तद्गुण आकाशोऽस्य सन्देहो देहमध्यं रयित्वं धनं तद्गुणा आपो यस्य बस्तिर्मूत्रस्थानं प्रतिष्ठात्वगुणा

सन्देशो वक्त्रो वस्तिरेव रयिः, पृथिव्येव पादावुर एव वेदि-र्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन, आस्यमा हवनीय" इत्यादि। अत्र संशयः। किं वैश्वानरशब्देन जाठ-रोऽग्निरुपदिश्यत, उत भूताग्निरथ तदभिमानिनी देवता, अथ वा शारीर आहोस्वित् परमेश्वर इति। किं पुनरत्र संशयकारणम्। वैश्वानर इति जाठरभूताग्निदेवतानां साधा-रणशब्दप्रयोगादात्मेति च शारीरपरमेश्वरयो। तत्र कस्योपा दानं न्याय्य, कस्य वा हानमिति भवति संशय.। किन्तावत् प्राप्त जाठरोऽग्निरिति। कुत'। तत्र हि विशेषेण क्वचित्प्र-योगो दृश्यते "अयमग्निर्वैश्वानरो योऽयमन्त पुरुषे, येनेदमन्नं पच्यते यदिदमद्यते" इत्यादौ। अग्निमात्र वा स्यात्, सामा-न्येनापि प्रयोगदर्शनात् "विश्वस्मा अग्निं भुवनाय देवा वैश्वा-नर केतुमह्नामकृण्वन्" इत्यादौ। अग्निशरीरा वा देवता स्यात् तस्यामपि प्रयोगदर्शनात् "वैश्वानरस्य सुमतौ स्याम,

पृथिवी तस्य पादौ तस्य क्ष्माधारत्व सम्म दयति॥ उर एवेत्यादिना॥ पूर्वमुपक्रमस्य.दृश्यत्वादिसाधारणधर्मस्य वाक्यशेषस्यसर्वज्ञत्वादिलिङ्गेन ब्रह्मनिश्चयमुक्त, तद्वदत्राप्युपक्रमस्थसाधारणवैश्वानरशब्दस्य वाक्यशेषस्थ-क्ष्माधारत्वलिङ्गनजाठरनिष्ठत्व.मति दृष्टान्तेन पूर्वपक्षयति॥ किं ताव दित्यादिना॥ पूर्वोत्तरपक्षयोर्जाठरब्रह्मोपास्तिः फलम्। यदद्यते तदन्न येन पच्यते सोऽय पुरुषे शारीरेऽन्तरस्तीत्यर्थ। पक्षान्तरमाह॥ अग्निमात्र वेति॥ विश्वस्मै भुवनाय वैश्वानरमग्निमह्ना केतु चिह्न सूर्य देवा अकृ-ण्वन् कृतवन्त। सूर्योदये दिनव्यवहारादित्यर्थ। स्याद्वैश्वानर इत्यनु षङ्ग। हि यस्मात् कं सुखप्रदो भुवनानां राजा वैश्वानरोऽभिमुखा श्रीरस्तेत्यभिश्रीरीश्वर। तस्मात् तस्य वैश्वानरस्य सुमतौ वय स्याम तस्या-

राजा हि वः भुवनानामभिश्रीः" इत्येवमाद्यायाः श्रुतेस्तद्देवतायामैश्वर्याद्युपेतायां सम्भवात् । अथात्मशब्दसामानाधिकरण्यात् उपक्रमे च "को न आत्मा किं ब्रह्म" इति केवलात्मशब्दप्रयोगादात्मशब्दवशेन वैश्वानरशब्दः परिणेय इत्युच्यते । तथापि शारीर आत्मा स्यात् तस्य भोक्तृत्वेन वैश्वानरसन्निकर्षात् प्रादेशमात्रमिति च विशेषणस्य तस्मिन् उपाधिपरिच्छिन्ने सम्भवात् । तस्मान्नेश्वरो वैश्वानर इत्येवं प्राप्ते । तत इदमुच्यते वैश्वानरः परमात्मा भवितुमर्हति । कुतः । साधारणशब्दविशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः । यद्यप्येतावुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ, वैश्वानरशब्दस्तु त्रयाणां साधारणः, आत्मशब्दश्च द्वयोः, तथापि विशेषो दृश्यते येन परमेश्वरपरत्वं तयोरभ्युपगम्यते "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादि । अत्र हि

सर्वाहितया शुभमतिर्भवत्वित्यर्थः । पक्षान्तरेऽप्यरुचिं वदन् पक्षान्तरमाह ॥ अथेत्यादिना ॥ आत्मा वैश्वानर इति श्रुतेरित्यर्थः । केवलस्य वैश्वानरशब्दस्यान्यत्र । अत्र जाठरो वैश्वानर इति मुख्यः पूर्वपक्षः प्राणाग्निहोत्रहोमाधारत्वलिङ्गात् । तस्य देहव्यापित्वादात्मत्वम् । मूर्धा द्युः इत्यादिकल्पनया ध्यानार्थत्वमिति ध्येयम् । सिद्धान्तयति ॥ तत इदमिति ॥ साधारणश्रुत्योरुपक्रमस्थयोर्विशेषणात् प्रथमश्रुतमुख्यत्वेन कायशरीरलिङ्गात् । सर्वात्मत्वेश्वरपरत्वं युक्तं न चरमश्रुतकल्पितहोमाधारत्वलिङ्गेन जाठरपरत्वमित्यर्थः । ननु निर्विशेषस्य कुतो विशेष इत्यत आह ॥ अत्र हीति ॥ अवस्थान्तरगतः त्रैलोक्यात्मना स्थित इत्यर्थः । जाठरस्यापि ध्यानार्थं विशेषकल्पनेति चेत् । न । अश्रुतकल्पनापत्तेः । ईश्वरस्य तु उपादानत्वाद्विशेषसत्त्वेन ध्यानार्थं श्रुतत्वमत्याह ॥ कारणत्वादिति ॥

परमेश्वर एव द्युमूर्द्धत्वादिविशिष्टोऽवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते कारणत्वात्। कारणस्य हि सर्व्वाभिः कार्य्यगताभिरवस्थाभिरवस्थावत्त्वाद् द्युलोकाद्यवयवत्वमुपपद्यते। "स सर्व्वेषु लोकेषु सर्व्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे सम्भवति। "एवं हास्य सर्व्वे पाप्मानः प्रदूयन्ते" इति च तद्विदः सर्व्वपाप्मप्रदाहश्रवणम्। "को न आत्मा किं ब्रह्म" इति चात्मब्रह्मशब्दाभ्यामुपक्रमः इत्येवमेतानि ब्रह्मलिङ्गानि परमेश्वरमेव गमयन्ति। तस्मात् परमेश्वर एव वैश्वानरः॥

## स्मर्य्यमाणमनुमानं स्यादिति ॥ २५ ॥

इतश्च परमेश्वर एव वैश्वानरः, यस्मात् परमेश्वरस्यैवाग्निरास्यं द्यौर्मूर्द्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्य्यते, "यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः। सूर्य्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः" इति तत् स्मर्य्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य परमेश्वरपरत्वेनानुमानं लिङ्गं गमकं स्यादित्यर्थः। इतिशब्दो हेत्वर्थो, यस्मादिदं गमकं, तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः। यद्यपि स्तुतिरियं

वैश्वानरत्वमाह ॥ स सर्व्वेष्वित्यादिना ॥ यथाग्नौ विक्षिप्तमिषीकातूलं दह्यते एवं हास्य विदुषः इत्यर्थः। सम्बन्धारोपेणापि स्तुतिसम्भवात् मूलश्रुत्यपेक्षेत्याशङ्क्याह ॥ यद्यपि स्तुतिरिति ॥ तथापीतिपदमर्थतः पठति ॥ स्तुतित्वमपीति ॥ द्युमूर्द्धत्वादिरूपेण स्तुतिः परमात्मन्येव कर्त्तु-

तस्मै लोकात्मने नम इति, स्तुतित्वमपि नासति मूलभूते वेद-वाक्ये सम्यगीदृशेन रूपेण सम्भवति।

"द्यां मूर्द्धानं यस्य विप्रा वदन्ति
खं वै नाभिं चन्द्रसूर्य्यौ च नेत्रे।
दिशः श्रोत्रे विद्धि पादौ क्षितिञ्च
सोऽचिन्त्यात्मा सर्व्वभूतप्रणेता"॥

इत्येवं जातीयका च स्मृतिरिहोदाहर्त्तव्या॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न, तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते॥२६॥**

अत्राह न परमेश्वरो वैश्वानरो भवितुमर्हति। कुतः। शब्दादिभ्योऽन्तःप्रतिष्ठानात् च। शब्दस्तावद्वैश्वानरशब्दो न परमेश्वरे सम्भवति, अर्थान्तरे रूढत्वात्। तथाऽग्निशब्दः "स एषोऽग्निर्वैश्वानरः" इति। आदिशब्दाद् हृदयगार्हपत्याद्यग्नित्रेताप्रकल्पनम्। तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयमित्यादिना च प्राणाहुत्यधिकरणतासङ्कीर्त्तनम्। एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः। तथान्तःप्रतिष्ठानमपि श्रूयते "पुरुषेऽन्तःप्रतिष्ठितं वेद" इति तच्च जाठरे

---

मयकथा विना स्मृतिमित्यर्थः। सता रूपेण स्तुतिसम्भव इत्यसदारोप इति भावः। शब्दादीनां गतिं वक्तुं सिद्धान्तमाक्षिप्य समाधत्ते॥ शब्दादिभ्य इति॥ स एषोऽग्निर्वैश्वानर इत्यग्निरहस्ये वैश्वानरविद्याया श्रुतोऽग्निशब्द ईश्वरे न सम्भवतीत्यर्थः। हृदयादिशब्दार्थमाह॥ आदिशब्दादिति॥ भक्तमन्नं, होमीयं होमसाधनं तेन प्राणाग्निहोत्रं कार्य्यमित्यर्थः। वाजसनेयिनामग्निरहस्ये शतपथ्यां वैश्वानरविद्योक्ता "स यो हैतमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद स सर्व्वत्रा-

सम्भवति। यदप्युक्तं "मूर्द्धैव सुतेजाः" इत्यादेर्विशेषात् कारणात्परमात्मा वैश्वानर इत्यत्र ब्रूमः। कुतो ह्येष निर्णयो यदुभयथापि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयो, न जाठरविषय इति। अथ वा भूताग्नेरन्तर्बहिश्चावतिष्ठमानस्यैष निर्देशो भविष्यति। तस्यापि हि द्युलोकादिसम्बन्धो मन्त्रवर्णादवगम्यते "यो भानुना पृथिवीं द्यामुतेमामाततान रोदसीमन्तरीक्षम्" इत्यादौ। अथ वा तच्छरीराया देवताया ऐश्वर्ययोगाद् द्युलोकाद्यवयवत्वं सम्भवति। तस्मान्न परमेश्वरो वैश्वानर इति। अत्रोच्यते। न तथा दृष्ट्युपदेशादिति। न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम्। कुत । तथा जाठरापरित्यागेन दृष्ट्युपदेशात्। परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यते "मनो ब्रह्मेत्युपासीत" इत्यादिवत्। अथ वा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते "मनोमयः प्राणशरीरो

चमस्मि" इत्युक्तं देहान्तरस्थत्वं जाठरे सम्भवति प्रसिद्धेरित्याह॥ तथेति॥ अत्र सूत्रे आदिपदेनैवान्तःप्रतिष्ठानस्य ग्रहे सम्भवति पृथगुक्तिः। साधारण्यालिङ्गत्वद्योतनार्थात् शब्दादिबलादिदमपि जाठरं गमयतीत्यभ्युच्चय॥ यद्यपि द्युमूर्द्धत्वादिविशेष ईश्वरपक्षपातो होमाधारत्वादिर्जाठरपक्षपातीति प्रतिभानं समं तथापि पारमेश्वरो विशेषो जाठरे न सम्भवतीति बलवानित्यत आह॥ अथ वेति॥ एष द्युमूर्द्धत्वादिनिर्देश इत्यर्थः। इमां पृथिवीं द्यामपि ते एव द्यावापृथिव्यौ रोदसी तयोर्मध्यमन्तरिक्षञ्च यो भूताग्निर्भासा रूपेणाततान व्याप्तवान् स ध्यातव्य इत्यर्थः। जडमात्रस्य न ध्येयत्वमित्यत आह॥ अथ वेति॥ परमेश्वरदृष्ट्योपास्य जाठराग्निप्रतीकबाधकाभ्यामग्निवैश्वानरशब्दाभ्यां द्युमूर्द्धत्वादिमानीश्वरो ब्रह्म

भारूप:" इत्यादिवत्। यदि चेह परमेश्वरो न विवक्ष्येत, केवल एव जाठरोऽग्निर्विवक्ष्येत, ततो मूर्द्धैव सुतेजा इत्यादेर्विशेषस्यासम्भव एव स्यात्। यथा तु देवता भूताग्निव्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते, तथोत्तरसूत्रे वक्ष्यामः। यदि च केवल एव जाठरो विवक्ष्येत, पुरुषेऽन्तः प्रतिष्ठितत्वं केवलं तस्य स्यात्, न तु पुरुषत्वं, पुरुषमपि चैनमधीयते वाजसनेयिनः 'स एषोऽग्निर्वैश्वानरो यत् पुरुषः, स यो हैतमेवमग्निं वैश्वानरं पुरुष पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। परमेश्वरस्य तु सर्व्वात्मत्वात् पुरुषत्व पुरुषेऽन्तःप्रतिष्ठितत्वञ्चोभयमुपपद्यते। ये तु पुरुषविधमपि चैनमधीयते इति सूत्रावयवं पठन्ति तेषामेषोऽर्थः। केवलजाठरपरिग्रहे पुरुषेऽन्तःप्रतिष्ठितत्व केवलं स्यात्, न तु पुरुषविधत्वम्। पुरुषविधमपि चैनमधीयते वाजसनेयिनः 'पुरुषविध पुरुषेऽन्तःप्रतिष्ठित वेद" इति। पुरुषविधत्वञ्च प्रकरणात् यदधिदैवतं द्युमूर्द्धत्वादिपृथिवीप्रतिष्ठितत्वान्तं, यच्चाध्यात्मं प्रसिद्धं मूर्द्धत्वादिचिबुकप्रतिष्ठितत्वान्तं, तत्परिगृह्यते॥

## अत एव न देवता भूतञ्च॥ २७॥

यत् पुनरुक्तं भूताग्नेरपि मन्त्रवर्णे द्युलोकादिसम्बन्धदर्श-

इत्यग्न्यात्मानमाह॥ अथ वा जाठर इति॥ अस्मिन् पक्षे प्राधान्येनेश्वरोपासना पूर्व्वत्र गुणतेति भेदः। उपाधिवाचिभ्यां पदाभ्यामुपहितो ब्रह्म इत्यर्थः। तत्पदावोऽन्यसम्भव व्याचष्टे॥ यदि चेति॥ पुरुषमपीत्यादिसूत्रमेवं व्याचष्टे॥ यदि च केवल इति॥ ईश्वरप्रतीकत्वोपाधित्वमुख्य इत्ययं विवक्षते तदेति शेष। यच्च पुरुष मूर्द्ध,

नात् मूर्धैव सुतेजा इत्याद्यवयवकल्पना तस्यैव भविष्यतीति तच्छरीराया देवताया वा ऐश्वर्ययोगादिति, तत्परिहर्त्तव्यमतोच्यते। अत एवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरः, तथा भूताग्निरपि न वैश्वानरः। न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पनोपपद्यते विकारस्य विकारान्तरात्मत्वासम्भवात्। तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्धत्वादिकल्पना सम्भवति, अकारणत्वात् परमेश्वराधीनैश्वर्यत्वाच्च। आत्मशब्दासम्भवश्च सर्वेष्वेषु पक्षेषु स्थित एव॥

## साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन, इदानीं तु विनैव

स एषोऽग्निर्वैश्वानरशब्दितजाठरोपाधिक इति सूत्रार्थः। यो वेद स सर्वत्र भुङ्क्ते इत्यर्थः। पुरुषत्वं पूर्णत्वमचेतनस्य जाठरस्य नेत्युक्त्वा पाठान्तरे पुरुषविधत्वं देहाकारत्वं तस्य नेत्याह॥ ये त्विति॥ ननु जाठरस्यापि देहव्यापित्वात् तद्विधत्वं स्यादित्यत आह॥ पुरुषविधत्वञ्च प्रकरणादिति॥ न देहव्यापित्वं पुरुषविधत्वं किन्तु विराड्देहाकारत्वमधिदैवं पुरुषविधत्वमध्यात्मञ्चोपासकमूर्धादिचिबुकान्तेष्वङ्गेषु सम्पन्नत्वमीश्वरस्य पुरुषविधत्वमित्यर्थः। ईश्वरस्याङ्गेषु सम्पत्तिर्वक्ष्यते। एवं जाठरं निरस्य पक्षद्वयं निरस्यति॥ अत एवेति॥ सूत्रं व्याचष्टे॥ यत् पुनरित्यादिना॥ द्युमूर्धत्वादि, सर्वलोक, फलभाक्त्व, सर्वपाप्मप्रदाह, इति आत्मब्रह्मशब्दोपक्रमोक्ता हेतवः। तानेव स्मारयति॥ न हि भूताग्नेरित्यादिना॥ यो भानुनेति मन्त्रोऽपीश्वरेच्छया महिमोक्त इति भावः। पूर्वमग्निवैश्वानरशब्दावीश्वरस्य वाचकावित्युक्तम्, अधुना प्रतीकोपाधिपरित्यागेन विराट्पुरुषाकारस्य भगवतो वैश्वानरस्याध्यात्ममूर्धादिचिबुकाङ्गेषु सम्पाद्योपास्यत्वाङ्गीकारेऽपि न शब्दादिविरोधः शब्दयोरीश्वरे योगवृत्त्या मुख्यत्वादस्त्य-

प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते। ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुध्येरन्निति। अत्रोच्यते। अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते। न हीह पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति जाठराग्न्यभिप्रायेणेदमुच्यते तस्याप्रकृतत्वादसंशब्दितत्वाच्च। कथं तर्हि, यत्प्रकृतं मूर्द्धादिषु चिबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति, यथा वृक्षे शाखा प्रतिष्ठिता पश्यतीति तद्वत्। अथ वा यः प्रकृतः परमात्माऽध्यात्ममधिदैवतञ्च, पुरुषविधत्वोपाधेः तस्य यत् केवलं साक्षिरूपं, तदभिप्रायेणेदमुच्यते पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति। निश्चिते च पूर्व्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचिद्योगेन

त्वादीनाञ्च तत्र सम्भवादित्याह ॥ साक्षादपीति ॥ स चात्मदत्वार्थमाह ॥ विनैवेति ॥ जाठराग्निसम्बन्धं विनेश्वरस्योपास्यत्वेऽपि शब्दाद्यविरोध जैमिनिर्मन्यत इत्यर्थः । इदमन्तस्थत्वमुदरस्थत्वरूपं नोच्यते किन्तु नखादि-शिखान्तावयवसमुदायात्मकपुरुषशरीरे मूर्द्धादिचिबुकान्तानाङ्गानि वृक्षे शाखावत् प्रतिष्ठितानि तानि, तेषु सम्यग्ज्ञो वैश्वानरः पुरुषेऽन्तः प्रतिष्ठित इत्युच्यते। वृक्षे यथा शाखास्थस्य पक्षिणो वृक्षान्तस्थत्वं तथा वैश्वानरस्य पुरुषान्तःस्थत्वमित्याह ॥ न हीह पुरुषविधमित्यादिना ॥ अग्न्यादि-शब्दानामीश्वरवाचित्वाज्जाठराग्नेरसंशब्दितत्वम् । परमेश्वरस्य पुरुषावयवेषु सम्पादनात् पुरुषविधत्वमन्तःस्थत्वञ्चेत्यर्थः ॥ पक्षान्तरमाह ॥ अथ वेति ॥

वर्णिष्यते, विश्वश्चायं नरश्चेति, विश्वेषां वाऽयं नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा सर्व्वात्मत्वात्, विश्वानर एव वैश्वानरः, तद्धितोऽनन्यार्थो, राक्षसवायसादिवत्। अग्निशब्दोऽप्यग्रणीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति। गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वञ्च परमात्मनोऽपि सर्व्वात्मत्वादुपपद्यते। कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यते, इति तां व्याख्यातुमारभ्यते॥

अभिव्यक्तेरित्याश्मरथ्यः॥ २९॥

अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात्। अभिव्यज्यते किल प्रादेशमात्रपरिमाणः परमेश्वर उपासकानां कृते। प्रदेशविशेषेषु हृदयादिषु उपलब्धिस्थानेषु विशेषेणाभिव्यज्यते। अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्त्युपपद्यत इत्याश्मरथ्य आचार्य्यो मन्यते॥

पुरुषविधत्वं पूर्व्ववत्। अत्र स्वत्वं माध्यस्थ्यं साक्षित्वमित्यर्थः। एवमत्र स्वत्वमीश्वरे व्याख्याय शब्दादीनि व्याचष्टे॥ निश्चिते चेति॥ विश्वश्चासौ नरो जीवश्च सर्व्वात्मत्वात्। विश्वेषां विकाराणां वा नरः कर्त्ता। विश्वे सर्व्वे नरा जीवा अस्यात्मत्वेन नियम्यत्वेन वा सन्तीति विश्वानरः, स एव राक्षस इतिवत् स्वार्थे तद्धितप्रत्ययः। नरे संज्ञायामिति पूर्व्वपदस्य दीर्घता। अगिधातोर्गत्यर्थस्य निप्रत्ययान्तस्य रूपमग्निरिति। अङ्गयति नमयत्यन्यं कर्म्मणां फलं प्रापयतीति अग्निरग्रणीरुक्तः। अञ्चितोऽगतीति वा अग्निः, वैश्वानरोपासकस्याविषभोजनात्, पूर्व्वं प्राणाग्निहोत्रं विद्याङ्गत्वेन विहितं, तदर्थमग्नित्रेताहितत्वं प्रधानाविरोधेन नेतव्यमितीत्याह॥ गार्हपत्येति॥ मात्रा परिमाणमतिक्रान्तोऽतिमात्रः तस्य

## अनुस्मृतेर्बादरिः ॥ ३० ॥

प्रादेशमात्रहृदयप्रतिष्ठितेन वाऽयं मनसाऽनुस्मर्य्यते तेन प्रादेशमात्र इत्युच्यते । यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत् । यद्यपि च यवेषु स्वगतमेव परिमाणं प्रस्थसम्बन्धाद्व्यज्यते, न चेह परमेश्वरगतं किञ्चित्परिमाणमस्ति, यद्धृदयसम्बन्धाद्व्यज्येत, तथापि प्रयुक्तायाः प्रादेशमात्रश्रुतेः सम्भवति यथा कथञ्चिदनुस्मरणमालम्बनमित्युच्यते । प्रादेशमात्रत्वेन वाऽयमप्रादेशमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै । एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्य्यो मन्यते ॥

## सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

सम्पत्तिनिमित्ता वा स्यात् प्रादेशमात्रश्रुतिः । कुतः । तथा हि समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन् पृथिवीपर्य-

---

विभोरित्यर्थः । उपासकानां स्थानेऽनुग्रहाय प्रादेशमात्रेऽभिव्यज्यते प्रादेशेषु वा मीयतेऽभिव्यज्यत इति प्रादेशमात्रः । मतान्तरमाह ॥ अनुस्मृतेरिति ॥ प्रादेशेन मनसा मित प्रादेशमात्र इत्यर्थः ॥ यथा कथञ्चिदिति ॥ मनसः प्रादेशमात्रत्वं स्मृतिद्वारा कथ्यमानं कल्पितं श्रुतेरालम्बनमित्यर्थः ॥ सूत्रस्यार्थान्तरमाह ॥ प्रादेशेति ॥ इत्थमपि स्वल्पां प्रादेशमात्रश्रुतेर्गतिमाह ॥ सम्पत्तेरिति ॥ ब्राह्मणं पठति ॥ प्रादेशमात्रमिवेति ॥ अपरिच्छिन्नमपीश्वरं प्रादेशमात्रत्वेन सम्पाद्य कल्पितं सम्यग्विदितवन्तो देवा एवैनमीश्वरमभिपन्ना न सम्पन्नाः प्राप्तवन्तो ह वै पूर्वकाले ततो वो युष्मभ्यं तथा द्युप्रभृतीनवयवान् वक्ष्यामि । यथा प्रादेशमात्रं प्रादेशपरिमाणमनतिक्रम्य मूर्धादिचुबुकान्तेषु वैश्वानरं सम्पादयिष्यामीति प्राचीनशाला-

न्तान् त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्ममूर्द्ध प्रभृतिषु चिबुकपर्य्यन्तेषु देहावयवेषु सम्पादयत् प्रादेशमात्रसम्पत्तिं परमेश्वरस्य दर्शयति । "प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः, तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति स होवाच, मूर्द्धानमुपदिशन्नुवाच, एष वा अतिष्ठा वैश्वानरः, इति । चक्षुषी उपदिशन्नुवाच, एष वै सुतेजा वैश्वानरः, इति । नासिके उपदिशन्नुवाच, एष वै पृथग्वर्त्मात्मा वैश्वानर, इति । मुख्यमाकाशमुपदिशन्नुवाच, एष वै बहुलो वैश्वानरः, इति । मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानरः, इति । चिबुकमुपदिशन्नुवाच, एष वै प्रतिष्ठा वैश्वानर" इति । चिबुकमित्यधरमुखफलकमुच्यते । यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्नायते, आदित्यश्च सुतेजस्त्वगुणः, छान्दोग्ये पुनर्द्यौः सुतेजस्त्वगुणा समा-

---

दीन् प्रति राजा प्रतिज्ञाय स्वकीयमूर्द्धानमुपदिशन् करेण दर्शयन्नुवाच । एष वै मे मूर्द्धा भूरादील्लोकानतीत्य उपरि तिष्ठन् त्वतिष्ठाऽसौ द्युलोको वैश्वानर ॥ तस्य मूर्द्धेति यावत् ॥ अध्यात्ममूर्द्धाभेदेनाधिदैवमूर्द्धा सम्पाद्य ध्येय इत्यर्थः । एवञ्चक्षुरादिषूहनीयं ॥ स्वकीये चक्षुषी दर्शयन् एष वै सुतेजाः सूर्य्यो वैश्वानरस्य चक्षुरित्युवाच । नासिकापदेन तन्निष्ठः प्राणो लक्ष्यते तस्मिन्नाध्यात्मिकप्राणेऽधिदैवप्राणस्य वायोर्दृष्टिमाह ॥ नासिके इति ॥ अत्र सर्वत्र वैश्वानरशब्दस्तदङ्गपरः । मुखस्य सुखं तस्मिन्नधिदैव बहुलाकाशदृष्टिः स्वसंज्ञकालालारूपास्वप्सु रयिशब्दितनदीयवत्तिस्तो-दकदृष्टिः, चिबुके प्रतिष्ठा पादरूपा पृथिवी द्रष्टव्या । ननु गुणवैषम्ये न विद्ययोर्भेदादन्यतरस्य श्रुतगुणस्यान्यत्रोपसंहाराभावात् प्रादेशमात्रश्रुतिः कथमाधेयेत्याशङ्क्याह ॥ यद्यपीत्यादिना ॥ एतावता क्वचिद्वैषम्येन बहुतर-

म्नायते, आदित्यस्य विश्वरूपत्वगुणः, तथापि नैतावता विशेषेण किञ्चिद्धीयते प्रादेशमात्रश्रुतेरविशेषात् सर्वशाखाप्रत्ययत्वाच्च। सम्पत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते ॥

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

आमनन्ति चैनं परमेश्वरमस्मिन् मूर्धचिबुकान्तराले जाबालाः। "य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित" इति, सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति "वरणायां नास्यां च मध्ये प्रतिष्ठित" इति कतमा वरणा कतमा नासीति। तत्र चेमामेव वरणां नासिकां चेति निरुच्य "सर्वाणीन्द्रियकृतानि पापानि वारयति सा वरणा सर्वाणीन्द्रियकृतानि पापानि वारयति सा वरणा सर्वाणीन्द्रियकृतानि पापानि नाशयति चेति सा नासीति वरणा नासीति" निरुच्य पुन-

तत्त्वभिप्रायेण विद्यैक्यं न हीयते शाखाभेदेऽपि सर्वशाखासु प्रतीयमानवैश्वानरोपासन एकमिति न्यायस्य वक्ष्यमाणत्वाच्च। अतिष्ठात्वगुणस्यान्येष्वपसंहर्त्तव्य। विश्वरूपत्वगुणस्य वाजिभिर्ग्राह्य। तथा च द्युमूर्धत्वादौ गुणसंहारे [illegible]त्वविश्वरूपत्वयोर्व्यवस्था। यद्वा शाखाभेदेन गुणव्यवस्थाऽस्तु [illegible]द्याभेद इति भावः। प्रादेशमात्रस्य सम्पत्तिप्रयुक्तत्वे युक्ततरं सम्पादयति॥ आमनन्तीति॥ य एषोऽनन्तोऽपरिच्छिन्न अतोऽव्यक्तो दुर्विज्ञेयस्तं कथं जानीयामित्यत्रेः प्रश्ने याज्ञवल्क्यस्योत्तरम्। स ईश्वरो अविमुक्ते कामादिभिर्बद्धो जीवो भेदकल्पनया प्रतिष्ठित उपास्य पुनरत्रिप्रश्नः स इत्युत्तरं वरणायामिति। एवं प्रश्नोत्तरे अग्रेऽपि ज्ञेये। तत्र च श्रुतौ इमामेव भ्रुवादिता, नासिका निरुच्येति भाष्ययो-

रथ्यामनन्ति । "कतमच्चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च य: सन्धि: । स एष द्युलोकस्य परस्य च सन्धिर्भवति" इति । तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुति: । अभिविमानश्रुति: प्रत्यगात्मताभिप्राया । प्रत्यगात्मतया सर्वै: प्राणिभिरभिविमीयत इत्यभिविमान: । अभिगतो वाऽयं प्रत्यगात्मत्वात् । विमानश्च मानवियोगादित्यभिविमानोऽभिविमिमीते वा सर्वं जगत्कारणत्वादित्यभिविमान:, तस्मात् परमेश्वरो वैश्वानर इति सिद्धम् ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये शङ्करभगवत्पूज्यपादकृतौ प्रथमाध्यायस्य द्वितीयपाद ॥

जना । सर्वानिन्द्रियकृतान् दोषान् वारयतीति वरणा भ्रू । सर्वान् दोषान् नाशयतीति नाशा नासिकेति निर्वचनं श्रुत । नासाभ्रुवोर्जीव-द्वारेश्वरस्थानत्वध्यानात् पापवारकत्वमिति मन्तव्य । तयोर्मध्येऽपि वि-शिष्य जीवस्य स्थान पृच्छति कतमदिति भ्रुवोरित्युत्तर । घ्राणस्येति पाठेऽपि घ्राणस्येत्यर्थ । स एष सन्धिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलो-कस्य सन्धित्वेन ध्येय इत्याह ॥ स एष इति ॥ आभिमुख्येनाह ब्रह्मेति विमिमीयते ज्ञायते इत्यभिविमान प्रत्यगात्मा । अभिगतश्चासौ विमान सर्वस्वरूपत्वे सत्यानन्त्यात् मानमत्र परिमाण । अभिविमिमीतेति नि-र्मिमीते । तस्माद्वैश्वानरवाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीगोविन्दानन्दभगवत्पादकृतौ श्रीमच्छारीरकमीमांसाभाष्यव्याख्यायां भाष्यरत्नप्रभायां प्रथमाध्यायस्य द्वितीय पाद ॥

नमः परमात्मने।

## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

इदं श्रूयते "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैस्तमेवैकं जानथ, आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" इति। अत्र यदेतद् द्युप्रभृतीनामोतत्ववचनादायतनं किञ्चिदवगम्यते तत् किं परं ब्रह्म स्यादाहोस्विदर्थान्तरमिति सन्दिह्यते। तत्रार्थान्तरं किमप्यायतनं स्यादिति प्राप्तम्। कस्मात्। अमृतस्यैष सेतुरिति श्रवणात्। पारवान् हि लोके सेतुः प्रख्यातः। न च परस्य ब्रह्मणः पारवत्त्वं शक्य-

---

नमः परमात्मने।

द्युद्योतभूमपदमक्षरमीक्षणीयं
श्रीरामचन्द्रहृदि भान्तमधीशितारम्।
इन्द्रादिवेद्यमखिलस्य च धारितारं
ज्योतिर्निभं पदमनिन्द्रमजं भजेऽहम्॥

एवं स्फुटब्रह्मलिङ्गपदबहुलानां प्रायेण सविशेषवाक्यानां समन्वयो द्वितीयपादे दर्शितः। अधुना यौगिकपदबहुलानां निर्विशेषप्रधानानां वाक्यानां समन्वयं वक्तुं तृतीयपाद आरभ्यते। अतोऽत्राधिकरणानां श्रुत्यध्यायपादसङ्गतयः स्फुटाः। पूर्वं सुपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थ-द्युमूर्धत्वादिना ब्रह्मपरत्वमुक्तम्। तद्वदत्राप्युपक्रमस्थसाधारणायतनत्वस्य वाक्यशेषस्थसेतुत्वश्रुत्या वस्तुतः परिच्छिन्ने प्रधानादौ व्यवस्थेति दृष्टान्तसङ्गत्याधिकरणसङ्गतिः। पूर्वपक्षे प्रधानाद्युपास्तिः। सिद्धान्ते निर्विशेषब्रह्मधीरिति फलम्॥ सूत्रं व्याख्यातुं वाक्यमुदाहरति॥ इदमिति॥ यस्मिन् द्यौरध्यात्मा विराट् प्राणैः सर्वैः सह मनः सूत्रात्मकं चकाराद्व्याकृतं कारणं ओतं कल्पितं तदपवादेन तमेवाधिष्ठानात्मानं प्रत्यगभिन्नं जानथ

मभ्युपगन्तुमनन्तमपारमिति श्रवणात्। अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्धं प्रधानं परिग्रहीतव्यं, तस्य हि कारणत्वादायतनत्वोपपत्तेः। श्रुतिप्रसिद्धो वा वायुः स्यात् "वायुर्वाव गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायञ्च लोकः परश्च लोकः सर्व्वाणि च भूतानि सन्दृब्धानि भवन्ति" इति वायोरपि विधारणत्वश्रवणात्। शारीरो वा स्यात्, तस्यापि भोक्तृत्वाद्भोग्यं प्रपञ्चं प्रत्यायतनत्वोपपत्तेरित्येवं प्राप्त इदमाह, द्युभ्वाद्यायतनमिति। द्यौश्च भूश्च द्युभुवौ द्युभुवावादी यस्य तदिदं द्युभ्वादि। यदेतस्मिन् वाक्ये द्यौः पृथिव्यन्तरिक्षं मनः प्राणा इत्येवमात्मकं जगदोतत्वेन निर्दिष्टं तस्यायतनं परं ब्रह्म भवितुमर्हति। कुतः। स्वशब्दादात्मशब्दादित्यर्थः। "आत्मशब्दो हीह भवति तमेवैकं जानथ आत्मानम्" इति। आत्मशब्दश्च

---

श्रवणादिना अन्या अनात्मवाचो विमुञ्चथ विशेषेण निःशेषं त्यजथ एष वाग्विमोकपूर्व्वकात्मसाक्षात्कारोऽमृतस्य मोक्षस्यासारापारदुर्व्वारसंसार-वारिधेः परपारस्य सेतुरिव सेतुः प्रापक इति मत्वत् श्रुतिर्मुमुक्षूनुपदिशति। तत्रायतनत्वस्य सन्धारणधर्म्मस्य दर्शनात् संशयमाह॥ तत्किमिति॥ अमृतस्य ब्रह्मणः सेतुरिति षष्ठ्या ब्रह्मणोभिन्नत्वेन सेतोः श्रुतत्वाद्भेदशब्दपरामृष्टं द्युभ्वाद्यायतनमब्रह्मैव सेतुरिव सेतुरित्याह॥ अमृतस्येति॥ भेदश्रवणात् सेतुरिति श्रवणाच्चेत्यर्थः। तत्र भेदश्रवणं व्याख्यातं सेतुश्रवणं व्याचष्टे॥ पारवानिति॥ अनन्तं कालतः। अपारं देशतः, जलविधारकमुख्यसेतोर्ग्रहणासम्भवात् गौणसेतुपक्षे कर्त्तव्ये मुख्यसेतुत्वविनाभूतपारवत्त्वगुणवानेव कश्चिद् ग्राह्यः। न तु मुख्यस्यानियतविधारणगुणवान्नीश्वर इति भावः। यथा लोके मणयः सूत्रेण ग्रथिता एवं वै गौतम समष्टिलिङ्गात्मकवायुना सूत्रेण सर्व्वाणि सन्दृब्धानि ग्रथितानि भवन्तीति श्रुत्यर्थः। आत्मशब्दस्तु पक्षद्वयमप्ययुक्त-

परमात्मपरिग्रहे सम्यगवकल्पते नार्थान्तरपरिग्रहे। क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इति। स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म सङ्कीर्त्यते "पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्" इति, "ब्रह्मैवेदममृतं पुरस्तात् पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण" इति च। तत्र त्वायतनायतनवद्भावश्रवणात् "सर्वं ब्रह्म" इति च सामानाधिकरण्यात्। यथाऽनेकात्मको वृक्षः शाखास्कन्धो मूलश्चेत्येवं नानारसो विचित्र आत्मेत्याशङ्का सम्भवति। तां निवर्त्तयितुं सावधारणमाह "तमेवैकं जानथ आत्मानम्" इति। एतदुक्तं भवति न कार्य्यप्रपञ्चविशिष्टो विचित्र आत्मा विज्ञेयः। किं तर्हि। अविद्याकृतं कार्य्यप्रपञ्चं "विद्यया प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानीथैक

विरुद्धं चाह॥ प्राणेशो वेति। सद्वितीयत्वेन सेतुशब्दोपपत्तेश्चेत्यर्थः। नन्वात्मशब्दो जीवे सम्भवतीत्यत आह॥ आत्मशब्दश्चेति॥ उपाधिपरिच्छिन्नस्य जीवस्य सर्व्ववस्तुप्रत्यक्त्वं मुख्यं नास्तीत्यर्थः। उपक्रमस्थसेतुधारणायतनत्वस्य गौणत्वेनाप्यविरोधात् प्रथमश्रुतात्मश्रुत्या ब्रह्मत्वनिश्चय इति भावः। स्वशब्दादित्यस्यार्थान्तरमाह। क्वचिच्चेति॥ प्रजानामुत्पत्तौ सदेव मूलं स्थितौ चायतनम् लयप्रतिष्ठेति ब्रह्मवाचिसच्छब्देन छान्दोग्ये ब्रह्मण आयतनत्वमत्रापि तथेत्यर्थः। अर्थान्तरमाह॥ स्वशब्देनैवेति। यस्मिन् द्यौरिति वाक्यात् पूर्व्वोत्तरवाक्ययोः पुरुषब्रह्मादिशब्देन ब्रह्मशब्दोक्तेर्मध्यवाक्येऽपि ब्रह्म ग्राह्यमित्यर्थः॥ पुरुष इति पूर्व्ववाक्यं, ब्रह्मैवेत्युत्तरवाक्यं, सर्व्वासु दिक्षु स्थितं सर्व्वं ब्रह्मैवेत्यर्थः। उत्तरेणोत्तरस्यां दिशि उदाहृतवाक्यस्य सविशेषब्रह्मपरत्वमाशङ्क्य वाक्यं व्याचष्टे॥ तमेवेत्यादिना॥ सामानाधिकरण्यात् विचित्र आत्मेति सम्बन्धः।

रसम्" इति। यथा यस्मिन्नास्ते देवदत्तः तदानयेत्युक्त आसनमेवानयति न देवदत्तं तद्वदायतनभूतस्यैवैकरसस्यात्मनो वि-शेषत्वमुपदिश्यते विकारानृताभिसन्धस्य चापवादः श्रूयते "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति। सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रपञ्चविलापनार्थं नानेकरसता-प्रतिपादनार्थं "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इत्येकरसताश्रवणात्। तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म। यत्तूक्तं सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति, अत्रोच्यते। विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते न पारवत्त्वादि। न हि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते। सेतु

यस्मिन् सर्वमोतमेवैकमित्येवकारैकशब्दाभ्यां निर्विशेषं शेषमित्युक्त्वा शेषत्वमाह ॥ विकारानृतेति ॥ विकारे अनृते कल्पिते अभिसन्धोऽभिमानो यस्य तस्यानर्थभाक्त्वेन निन्दाश्रुतेश्च कूटस्थस्य ज्ञेयमित्यर्थः। कथं तर्हि सामानाधिकरण्यं तत्राह ॥ सर्वं ब्रह्मेति ॥ यथोरः स स्थाणुरितिवदुक्तं सर्वं तद्ब्रह्मेति सर्वोद्देशेन ब्रह्मत्वविधानं बाधनायां, न तु यद्ब्रह्म तत्सर्वमिति नानारसत्वार्थमित्यर्थः। तत्र निदर्शनमाह ॥ स यथेति ॥ लवणपिण्डोऽन्तर्बहिश्च रसान्तरशून्यः सर्वो लवणैकरसो यथा, एवमरे मैत्रेयि चिदेकरस आत्मेत्यर्थः। यद्यपि पारवत्त्वसावयवत्वादिकं मुख्यसेतुत्वव्यभिचारि तथापि सेतोर्जलादिबन्धनरूपं विधारणं तदेव व्यभिचारित्वेऽपि सेतुपदार्थैकदेशत्वादनुगतत्वेन ग्राह्यं न तु पदार्थैकदेशभूतं पारवत्त्वादिकमित्याह ॥ अत्रोच्यत इति ॥ दृष्टान्तग्रहेऽतिप्रसङ्गमाह ॥ न हीति ॥ अत्र श्रुतौ परैरपीति शेषः। विधारणस्य मुख्या-

शब्दार्थोऽपि विधारणत्वमात्रमेव न पारवत्त्वादि विवक्षति षिञो बन्धनकर्मणः सेतुशब्दव्युत्पत्तेः। अपर आह तमेवैकं जानथ आत्मानमिति। यदेतत् सङ्कीर्तितमात्मज्ञानं यच्चैतदन्या वाचो विमुञ्चथेति वाग्विमोचनं तदत्रामृतत्वसाधनत्वादमृतस्यैष सेतुरिति सेतुश्रुत्या सङ्कीर्त्यते न तु द्युभ्वाद्यायतनम्। तत्र यदुक्तं सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमित्येतदयुक्तम्॥

## मुक्तोपसृप्यव्यपदेशात्॥ २॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनं यस्मान्मुक्तोपसृप्यताऽस्य व्यपदिश्यमाना दृश्यते। मुक्तैरुपसृप्यं मुक्तोपसृप्यम्। देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिरविद्या, ततस्तत्पूजनादौ रागस्तत्परिभवादौ च द्वेषः, तदुच्छेददर्शनाद्भयं मोहश्चेत्येवमयमनन्तभेदोऽनर्थव्रातः सन्ततः सर्वेषां नः प्रत्यक्षः, तद्विपर्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्यं गम्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति। कथम्।

अंत्यं स्फुटयति॥ षिञ इति॥ सिनोति बध्नातीति सेतुपदार्थैकदेशो विधारणमित्यर्थः। तथा चामृतपदस्य भावप्रधानत्वादमृतत्वस्य सेतुर्विधारकं ब्रह्मात्मैवामृतत्वं नान्यस्येत्यर्थः। यद्वा द्युभ्वाद्याधारो ब्रह्म न सेतुशब्दार्थं किन्त्वन्यविहितं ज्ञानमित्याह॥ अपर इति॥ फलितमाह॥ तत्र यदुक्तमिति॥ स्थाने स्थितौ स्पृहीते सतोत्यर्थः। मुक्तैरुपसृप्यं प्रत्यक्त्वेन प्राप्यं यद्ब्रह्म तस्माद्वीतिरिति सूत्रार्थः। मुक्तिप्रतियोगिनं बन्धं दर्शयति॥ देहादिष्विति॥ तद्विपर्ययेणेति उक्तपञ्चक्लेशात्मकबन्धनिवृत्त्याऽऽत्मना स्थितमित्यर्थः। यथा नद्यो गङ्गाद्या नामरूपे विहाय समुद्रात्मना तिष्ठन्ति तथा ब्रह्मविदपि संसारं विहाय परात् कारणादव्य-

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि तस्मिन् दृष्टे परावरे" ॥

इत्युक्त्वा ब्रवीति "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे ।

'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः, ॥
अथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" ॥

इत्येवमादौ । प्रधानादीनान्तु न क्वचिन्मुक्तोपसृप्यत्वं प्रसिद्धमस्ति । अपि च "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ" इति वाग्विमोकपूर्व्वकं विज्ञेयत्वमिह द्युभ्वाद्यायतनस्योच्यते । तच्च श्रुत्यन्तरे ब्रह्मणो दृष्टम् ।

"तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत्" ॥ इति ।

भात् परं पूर्णं स्वयं ज्योतिरानन्दं प्रत्यक्त्वेन प्राप्य तिष्ठतीत्याह ॥ तथा विद्वानिति ॥ इदं प्रधानादेः किं न स्यादित्यत आह ॥ ब्रह्मणश्चेति ॥ अस्य मुक्तो हृदीति पदेनात्मधर्मत्वं कामानां निरस्तं यदा कामनिवृत्तिरथ तदाऽमृतो भवति मरणहेत्वभावात् केवलमनर्थनिवृत्तिः किन्त्वत्र देहे तिष्ठन्नेव ब्रह्मानन्दमश्नुत इत्यर्थः । लिङ्गान्तरमाह ॥ अपि चेति ॥ धीरो विवेकी तमेवात्मानं विज्ञाय विद्ध्वा । तत्पदार्थं ज्ञात्वा वाक्यार्थज्ञानं कुर्य्यात् । ज्ञानार्थिनो ज्ञानप्रतिबन्धककर्माकारकत्वादेवं शब्दमाह ॥ वेति ॥ बहूनित्युक्त्वा अल्पान् वेदान्तशब्दानङ्गीकरोति ।

"अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु च" ॥ इति ।

तस्मादपि द्युभ्वाद्यायतनं परं ब्रह्म ॥

नानुमानमतच्छब्दात् ॥ ३ ॥

यथा ब्रह्मणः प्रतिपादको वैशेषिको हेतुरुक्तो नैवमर्थान्तरस्य वैशेषिको हेतुः प्रतिपादकोऽस्तीत्याह। नानुमानं सांख्यस्मृतिपरिकल्पितं प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम्। कस्मात्। अतच्छब्दात्। तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्दो न तच्छब्दोऽतच्छब्दः। न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति येनाचेतनं प्रधानं कारणत्वेनायतनत्वेन वाऽवगम्येत। तद्विपरीतस्य चेतनस्य प्रतिपादकशब्दोऽत्रास्ति "यः सर्वज्ञः सर्ववित्" इत्यादि। अत एव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते ॥

प्राणभृच्च ॥ ४ ॥

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वं च सम्भ-

एतानि वागिन्द्रियस्थानत्वाद् वाक्यशब्देनोच्यन्ते तेषां शोषणात्मनात्मशब्दोच्चारणफलं तज्ज्ञानान्मनसो ग्लानिमात्रमित्यर्थः ॥ वैशेषिक इति ॥ असाधारण आत्मशब्दादिरित्यर्थः। अतच्छब्दादित्यस्यार्थान्तरमाह ॥ तद्विपरीतस्येति ॥ अत एवातच्छब्दादेव प्राणभृच्चेति सूत्रे चकारः पूर्वसूत्रस्थनञोऽनुषङ्गार्थः। सर्वज्ञपदसमानाधिकरण आत्मशब्दो न जीववाचीत्यतच्छब्दत्वादित्यर्थः। ननु नानुमानमप्राणभृतावतच्छब्दादित्येकमेव सूत्रं किमर्थं न कृतम्, उभयनिरासहेतोरैक्यादित्यत आह ॥ पृथगिति ॥ योगः सूत्रं, उत्तरसूत्रस्थहेतूनां जीवमात्रनिरासेनान्वयेऽपि सुबोधार्थं प्राणभृच्चेति पृथक् सूत्रकरणमित्यर्थः। तानेव हेतूनाकाङ्क्षाद्वारा व्याचष्टे ॥ कुतश्चेत्यादिना ॥ यद्यपि विशुद्ध सम्भ-

भवति तथाऽप्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसम्भवे सत्यस्मादेवातच्छब्दात्प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः। न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक् सम्भवति। पृथग्योगकरणमुत्तरार्थम्। कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः॥

## भेदव्यपदेशात्॥ ५॥

भेदव्यपदेशश्चेह भवति "तमेवैकं जानथ आत्मानम्" इति ज्ञेयज्ञातृभावेन। तत्र प्राणभृत् तावत् मुमुक्षुत्वाज्ज्ञाता परिशेषादात्मशब्दवाच्यं ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते। कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः॥

## प्रकरणात्॥ ६॥

प्रकरणाच्चेदं परमात्मन 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात्। परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यात्, न केवले प्राणभृति। कुतश्च न प्राणभृद् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः॥

## स्थित्यदनाभ्याञ्च॥ ७॥

द्युभ्वाद्यायतनञ्च प्रकृत्य "द्वा सुपर्णा सयुजा सखायौ'

णात्मैवात्र ध्येय तथापि जीवत्वाकारेण चाद्धर्मैश्चाभेदात्र भेदरूपत्वमित्यर्थः। एतच्च जीवत्वविशिष्टत्वेन जीवस्य द्युभ्वादिवाक्यार्थत्व निरस्तत्वेन शुद्धरूपेणेति मन्तव्यम्। ननु स्थित्यदनाभ्यां जीवस्य द्वा सुपर्णेत्यनौत्मावपि ईश्वर आयतनवाक्येन विषय आह इत्यत आह। यदि

इत्यत्र स्थित्यदने निर्दिश्येते, "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति कर्मफलाशनम्, "अनश्नन्नन्योऽभिचाकशीति" इत्यौदासीन्येनावस्थानं, ताभ्यां च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्र गृह्येते। यदि चेश्वरो बुद्ध्याद्यायतनत्वेन विवक्षितः स्यात् प्रकृतस्येश्वरस्य क्षेत्रज्ञात् पृथग्वचनमवकल्पेत, अन्यथा ह्यप्रकृतवचनमाकस्मिकमसम्बद्धं स्यात्। ननु तवापि क्षेत्रज्ञस्येश्वरात् पृथग्वचनमाकस्मिकमेव प्रसज्येत न तस्याविवक्षितत्वात्। क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्युपाधिकसम्बन्धो लोकत एव प्रसिद्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते। ईश्वरस्तु लोकतोऽप्रसिद्धत्वात् श्रुत्या तात्पर्येण विवक्षित इति न तस्याकस्मिकवचनं युक्तम्। "गुहां प्रविष्टावात्मानौ हि" इत्यत्राप्येतद्दर्शितम्। द्वा सुपर्णेत्यस्यामृचीश्वरक्षेत्रज्ञावुच्येते इति। यदाऽपि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते तदाऽपि न विरोधः कश्चित्। कथं प्राणभृद्धि घटादिच्छिद्र-

चेश्वर इति॥ यत्र चेश्वरः शुद्धचिन्मात्रो ग्राह्यः। न सर्वत्र बुद्ध्यादिविशिष्टः तस्यात्राप्रतिपाद्यत्वात्। तथा चाप्रतिपाद्यार्थस्य कस्यचनकथने वचनासम्बन्धात्। आद्यवाक्येन यत्कृत्य कार्य्यमित्यभिसन्धिः। तमताऽऽशङ्कते॥ ननु तवापीति॥ ब्रह्मस्वरूपप्रतिपादनार्थमनूद्यमानस्यापि लोकप्रसिद्धस्य जीवस्यानुवादमात्र इति परिहरति। नेति॥ ननु द्वासुपर्णेत्यत्र बुद्धिजीवयोरुक्तेः कथमिदं वचनमित्यत आह॥ गुहामिति॥ स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञयोरुक्तादेवैक्यदर्शनम् इत्यर्थः। अन्यत्र जीवेशौ नानुवाद्यौ पैङ्गिव्याख्याविरोधात्तत्राप्यक्ततिपरिहरत आह। यदापीति॥ तदापीति व्याख्यातमनुक्त्वाविरोधाभावार्थं। सदनमात्रेण बुद्धिमत्त्वा

वत् सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्या-यतनं न भवतीति प्रतिषिध्यते। यस्तु सर्वशरीरेषूपाधिभिर्वि-नोपलक्ष्यते पर एव स भवति। यथा घटादिच्छिद्राणि घटा-दिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति तद्वत्प्राज्ञस्य परस्मादन्यत्वानुपपत्तेः प्रतिषेधो नोपपद्यते, तस्मात् सत्त्वाद्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः तस्मा-त्परमेव ब्रह्म द्युभ्वाद्यायतनम्। तदेतत् "अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यनेनैव सिद्धं, तस्यैव हि भूतयोनिवाक्यस्य मध्य इदं पठितं "यस्मिन् द्यौः पृथिवी चान्तरिक्षम्" इति। प्रप-ञ्चार्थन्तु पुनरुपन्यस्तम्।

## भूमा सम्प्रसादादध्युपदेशात् ॥ ८ ॥

इदं समामनन्ति "भूमा त्वेव जिज्ञासितव्य" इति, "भू-मानं भगवो जिज्ञासे" इति, "यत्र नान्यत्पश्यति नान्यच्छृ-णोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृ-

स्थितिवाक्येन सुखादिविलक्षणशुद्धप्रत्यग्ब्रह्मणो ध्येयत्वोक्तेर्द्युभ्वादिवाक्ये तदेव ग्राह्यं न बुद्ध्युपहितो जीव इति सूत्रयोजनामाह। कथमि-त्यादिना। तत्त्वानुपहितो जीव उक्तो न पर ब्रह्मेत्यत आह॥ अपितु॥ पौनरुक्त्यं शङ्कते॥ तदेतदिति॥ द्युभ्वादिवाक्यस्य ब्रह्मपर-त्वनिर्णयं। फल धत्ते॥ प्रपञ्चार्थमिति॥ सेतुशब्दव्याख्यानेन भूतयोने-र्ब्रह्मणः सर्वाधारत्वनिर्णयं। तथात्मशब्दकोपनिषद्, ब्रह्मापि सम-न्वितेति चिन्तम्॥ भूमा॥ छान्दोग्यमुदाहरति॥ इदमिति॥ नाम्नः उपासकं भूमैव सुखं तस्मात्सर्वोत्तमवस्तुमार्गेणा भूमैव विचार्य इति नारदं प्रति सनत्कुमारेणोक्ते सति नारदो ब्रूते॥ भूमान-मिति॥ भूम्नो ब्रह्माद्वितीयत्वमाह॥ यत्रेति॥ भूमलक्षणं परि-

णोत्यन्यद्विजानाति तदल्पम्” इत्यादि । तत्र संशयः, किं प्राणो भूमा स्यादाहोस्वित् परमात्मेति । कुतः संशयः । भूमेति तावद् बहुत्वमभिधीयते । 'बहोर्लोपो भू च बहोः'' (पा०६।४।१५८) इति भूमशब्दस्य भावप्रत्ययान्ततास्मरणात् । किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकाङ्क्षायां "प्राणो वा आशाया भूयान्'' इति सन्निधानात् प्राणो भूमेति प्रतिभाति । तथा श्रुत "श्रुतेव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्'' इति, “सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु'' इति प्रकरणोत्थानात्परमात्मा भूमा इत्यपि प्रतिभाति । तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः । किं तावत्प्राप्तं प्राणो भूमेति । कस्मात् । भूयः प्रश्नप्रतिवचन-

---

विषयवाक्यमुदाहरति ॥ यत्रेति ॥ अत्र संशयबीजं प्रश्नपूर्वकमाह ॥ कुत इत्यादिना ॥ बहोर्भाव इति विग्रहे पृथ्वादिभ्य इमनिज्वेति इमनिच्प्रत्यये कृते बहोर्लोपो भू च बहोरिति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपः स्यात् बहोः स्थाने भूरित्यादेशश्च स्यादित्युक्ते भूमन्निति शब्दो निष्पन्नः, तस्य भावार्थकेमनिच्प्रत्ययान्तत्वाद्बहुत्वं वाच्यम् । तत् किं धर्मिकमित्याकाङ्क्षायां सन्निहितप्रकरणस्थः प्राणो धर्मी भाति । वाक्योपक्रमस्थ आत्माऽपि स्वप्रतिपादनापेक्षो धर्मित्वेन भातीति सन्निहितव्यवहितप्रकरणाभ्यां संशय इत्यर्थः । पूर्वमात्मशब्दस्तु इत्याद्यायतनप्रश्नोत्युक्तं, तरति शोकमात्मविदित्यत्र प्रश्नवत्त्वं तदप्यत्वयोगादित्याशङ्क्य पूर्वपक्षयति ॥ प्राणो भूमेति ॥ धर्मधर्मिणोरभेदात् सामानाधिकरण्यं द्रष्टव्यम् । पूर्वोत्तरपक्षयोः प्राणोपास्त्योः प्रश्नपूर्वं फलं क्रमेण मन्तव्यम् । नामाद्याचे भूय प्रश्नोत्तरभेदादयभेदो दृश्यते । भूमा तु प्राणात् परं भूयः प्रश्न विनैवोक्तश्चिन्न प्राणाद्भिन्न इत्याह ॥ कस्मादित्यादिना ॥ प्राणाद्भूय इति न प्रश्न इति पूर्वपक्षस्य । नन्वेष तु वा अतिवदतीति तपस्त्वेन प्राणप्रकरण-

परम्परादर्शनात्। यथा हि "अस्ति भगवो नाम्नो भूयः" इति, "वाग्वाव नाम्नो भूयसी" इति, तथा "अस्ति भगवो वाचो भूयः" इति, "मनो वाव वाचो भूयः" इति च नामादिभ्यो आप्राणात् भूयः प्रश्नप्रतिवचनप्रवाहः प्रवृत्तः, नैवं प्राणात्परं भूयः प्रश्नप्रतिवचनं दृश्यते। "अस्ति भगवः प्राणाद्भूयः" इति, "अदो वाव प्राणाद्भूयः" इति, "प्राणमेव तु नामादिभ्य आशान्तेभ्यो भूयांसं प्राणो वाव आशाया भूयान्" इत्यादिना सप्रपञ्चमुक्त्वा प्राणदर्शिनश्चातिवादित्वम् "अतिवाद्यसि" इति, "अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत" इत्यभ्यनुज्ञाय, "एष तु वा अतिवदति यः सत्येनातिवदति" इति प्राणव्रतमतिवादित्वमनुकृष्यापरित्यज्यैव प्राणं सत्यादिपरम्परया भूमानमवतारयन्, "प्राणमेव भूमानं मन्यते" इति गम्यते। कथं पुनः प्राणे भूमेति व्याख्यायमाने यत्र नान्यत्पश्यतीत्येतद्भूम्नो लक्षणपरं वचनं व्याख्येयमिति। उच्यते। सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहारनिवृत्तिदर्शनात् सम्भवति

---

विच्छेदात् न प्राणो भूमेत्यत आह ॥ प्राणमेवेति ॥ न नामाद्याशान्तानुपासनतोऽत्र प्राण एव वदतीत्यतिवादी प्राणवित् तं प्रति अतिवाद्यसीति केनचित् प्रश्ने कृते अस्मीति ब्रूयात्, नाहमतिवादीत्यपह्नवं न कुर्यादित्युक्तम् प्राणविदम्, एष इति परामृश्य सत्यवचनध्यानमननश्रद्धादिधर्मपरम्परां विधाय भूमोपदेशात् प्रकरणाविच्छेद । तुशब्दो नामाद्युपासकस्यातिवादित्वनिरासार्थ इत्यर्थः । भूम्नो लक्षणवचनं सुखत्वमद्वैतत्वञ्च प्राणे प्रश्नपूर्वकं योजयति ॥ कथं पुनरित्यादिना ॥ प्राणग्रस्तेषु प्राणे लीनेषु न शृणोतीति सुषुप्तपुरुष इति शेषः । "गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनः आहवनीयः प्राणः" इति श्रुतेः, प्राणा

प्राणस्यापि यत्र नान्यत्पश्यतीत्येतल्लक्षणम्। तथा च श्रुतिः "न शृणोति न पश्यति" इत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्तावस्थामुक्त्वा "प्राणाग्नय एवैतस्मिन् पुरे जाग्रति" इति तस्यामेवावस्थायां प्राणस्य जागरणं ब्रुवती प्राणप्रधानां सुषुप्तावस्थां दर्शयति। यच्चैतद्भूम्नः सुखत्वं श्रुतं "यो वै भूमा तत् सुखम्" इति तदप्यविरुद्धम्, "अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिञ्छरीरे सुखं भवति" इति सुषुप्तावस्थायामेव सुखश्रवणात्। यच्च "यो वै भूमा तदमृतम्" इति, तदपि प्राणस्याविरुद्धं, "प्राणो वा अमृतम्" इति श्रुतेः। कथं पुनः प्राणं भूमानं मन्यमानस्य "तरति शोकमात्मवित्" इत्यात्मविविदिषया प्रकरणस्योत्थानम् उपपद्यते, प्राण एवेहात्मा विवक्षित इति ब्रूमः। तथा हि "प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः" इति प्राणमेव सर्वात्मानं करोति। "यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्" इति च सर्वात्मत्वारनाभिनिदर्शनाभ्यां च सम्भवति वैपुल्यात्मिका भूमरूपता प्राणस्य। तस्मात्प्राणो भूमेत्येवं प्राप्तम्। तत इदमुच्यते। परमात्मैवेह भूमा भवितुमर्हति, न प्राणः।

---

अग्नय इह पुरे शरीरे जाग्रति सव्यापारा एव तिष्ठन्तीत्यर्थः। देवो जीवः, अथ तदा स्वप्नदर्शनकाले सुखश्रवणात् प्राणस्य सुखत्वमविरुद्धमित्यर्थः। आत्मपदेनोपक्रमविरोधं परिहरति॥ प्राण एवेति॥ प्राणस्यात्मत्वं कथमित्याशङ्क्य श्रुत्यादिनाह॥ तथा हीति॥ सर्वं समर्पितमिति च सर्वाधिष्ठानं प्राणं स्वीकरोति श्रुतिरित्यन्वयः। अत आत्मत्वात् प्राणेऽपि सुखमिति भावः। भूमरूपत्वं योजयति॥ सर्वात्मत्वेति॥

कस्मात्। सम्प्रसादादध्युपदेशात्। सम्प्रसाद इति सुषुप्तं स्थानमुच्यते सम्यक्प्रसीदत्यस्मिन्निति निर्वचनात्। बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात्, तस्याञ्च सम्प्रसादावस्थायां प्राणो जागर्त्तीति प्राणोऽत्र सम्प्रसादोऽभिप्रेयते प्राणादूर्द्ध्वं भूम्न उपदिश्यमानत्वादित्यर्थः। प्राण एव चेद्भूमा स्यात् स एव तस्मादूर्द्ध्वमुपदिश्येतेत्यश्लिष्टमेतत् स्यात्। न हि नामैव नाम्नो भूय इति नाम्न ऊर्द्ध्वमुपदिष्टम्। किं तर्हि। नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यं वाग्वाव नाम्नो भूयसीति, तथा वागादिभ्योऽप्यामाप्राणादर्थान्तरमेव तत्र तत्रोर्द्ध्वमुपदिष्टं तद्वत् प्राणादूर्द्ध्वमुपदिश्यमानो भूमा प्राणादर्थान्तरभूतो भवितुमर्हति। नन्विह नास्ति प्रश्नः, अस्ति भगवः प्राणाद्भूय इति। नापि प्रतिवचनमस्ति प्राणाद्दाव भूयोऽस्तीति। कथं प्राणादधिभूमोपदिश्यत इत्युच्यते प्राणविषयमेव चातिवादित्वमुत्तरत्रानुकृष्यमाणं पश्यामः। "एष तु वा अतिवदति यः

सम्प्रसादशब्देन प्राणं कथयितुं सुप्तार्थं दर्शयति॥ सम्प्रसाद इति॥ स वा एष एतस्मिन् सम्प्रसादे स्थित्वा पुनराद्रवतीति प्रयोगाच्च। तत् पदं सुषुप्तिवाचकमित्याह॥ बृहदिति॥ वाच्यार्थसम्बन्धात् प्राणो लक्ष्य इत्याह॥ तस्याञ्चेति॥ अत्र सूत्र इत्यर्थः। भूमा प्राणाद्भिन्नः, अत्राध्याये। तस्मादूर्द्ध्वमुपदिष्टत्वान्नामादेरूर्द्ध्वमुपदिष्टवागादिवदित्यर्थः। विपक्षे हेतूच्छेदं बाधकमाह॥ प्राण एव चेदिति॥ स्वस्यैव स्वस्मादूर्द्ध्वमुपदिष्टत्वमयुक्तं नामादिषु अदृष्टत्वेत्यर्थः। हेत्वसिद्धिं शङ्कते॥ नन्विहेति। प्रकृतप्राणवित् परामर्शक एष शब्दो न भवति तस्य यच्छब्दपरतन्त्रत्वेन सत्यादिवादिवाचित्वात्। अतः प्राणप्रकरणं विच्छिन्नमिति हेत्वसिद्धि-

सत्येनातिवदति" इति, तस्मान्नास्ति प्राणादध्युपदेश इति। अत्रोच्यते। न तावत्प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुं विशेषवादाद्य सत्येनातिवदतीति। ननु विशेषवादोऽप्ययं प्राणविषय एव भविष्यति। कथम्। यथैषोऽग्निहोत्रीयः सत्यं वदतीत्युक्ते न सत्यवदनेनाग्निहोत्रित्वं, केन तर्हि, अग्निहोत्रेणैव, सत्यवदनन्त्वग्निहोत्रिणो विशेष उच्यते, तथैष तु वा अतिवदति यः सत्येनातिवदतीत्युक्ते न सत्यवदनेनातिवादित्वं केन तर्हि, प्रकृतेन प्राणविज्ञानेनैव, सत्यवदनन्तु प्राणविदो विशेषो विवक्ष्यत इति, नेति ब्रूमः, श्रुत्यर्थपरित्यागप्रसङ्गात्, श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते यः सत्येनातिवदति सोऽतिवदतीति। नात्र प्राणविज्ञानस्य सङ्कीर्त्तनमस्ति। प्रकरणात् तु प्राणविज्ञानं सम्बध्येत। तत्र प्रकरणानुरोधेन श्रुतिः परित्यक्ता स्यात्। प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न सङ्गच्छेत। एष तु वा अतिवदतीति। सत्यन्त्वेव विजिज्ञासितव्यमिति च प्रयत्नान्तरकरणमर्थान्तर-

रित्याह॥ अत्रोच्यत इति॥ सत्येनातिवादित्वं विशेष तदनुकर्षो य एष इत्युक्ते न पूर्वानुकर्ष इत्यर्थः। य एष प्राणविदतिवदति इत्यनूद्य स सत्यं वदेदिति विधानात् न प्राणप्रकरणविच्छेद इति शङ्कते॥ नन्विति॥ सत्यशब्दोऽबाधिते रूढो ब्रह्मवाचकः। तदन्यस्य मिथ्यात्वात्। सत्यवचने त्वबाधितार्थप्रत्यायकत्वात् लाक्षणिक इति नात्र सत्यवचनविधिरित्याह। नेति ब्रूम इति॥ किन्तु सत्येन ब्रह्मणातिवदतीति तृतीया श्रुत्या ब्रह्म करणकमतिवादित्वं श्रुतं, तस्य प्रकरणाद् बाधो न युक्त इत्याह॥ श्रुत्या ह्यत्रेत्यादिना॥ नात्रेति सत्यवाक्ये इत्यर्थ एव सत्येनेति श्रुत्या प्रकरणं बाध्यमित्युक्ता

विवक्षां सूचयति। तस्माद्यथैकवेदिप्रशंसायां प्रकृतायामेष तु महाब्राह्मणो यश्चतुरो वेदानधीत इत्येकवेदिभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते तादृगेतद् द्रष्टव्यम्। न च प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति, प्रकृतसम्बन्धासम्भवकारितत्वादर्थान्तरविवक्षायाः। तत्र प्राणान्तमनुशासनं श्रुत्वा तूष्णीं भूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति। यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तदेष तु वा अतिवदति यः सत्येनातिवदतीति। तत्र सत्यमिति परं ब्रह्मोच्यते परमार्थरूपत्वात् "सत्यं ज्ञानमनन्तं ब्रह्म" इति च श्रुत्यन्तरात्। तथा व्युत्पादिताय नारदाय "सोऽहं भगवः सत्येनातिवदानि" इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमानमुपदिशति। तत्र यत्प्राणादधि-

---

श्रुतलिङ्गेनापि बाधमाह॥ प्रकृतेति॥ विजिज्ञास्यत्वलिङ्गाच्च पूर्वोक्ताद्भिन्नमित्याह॥ सत्यन्त्वेवेति॥ प्रकरणविच्छेदे दृष्टान्तमाह॥ तस्मादिति॥ श्रुतिलिङ्गबलादेतत् सत्यं प्रकृतात् प्राणात् प्राधान्येन भिन्नं द्रष्टव्यमित्यर्थः। एवमतिवादित्वस्य ब्रह्मसम्बन्धोक्त्या प्राणलिङ्गं निरस्तम्। यत्तु प्रश्नविनोक्तत्वलिङ्गाद् भूमा प्राण इति तन्न, तस्याप्रयोजकत्वादित्याह॥ न चेति॥ प्रश्नभेदादर्थभेद इति न नियमः, एकस्यात्मनो मैत्रेय्या बहुशः पृष्टत्वात्, प्रश्नविनोक्तचातुर्वेदस्य प्रकृतैकवेदाद्भिन्नत्वदर्शनाच्चेत्यर्थः। तत्र यथा चातुर्वेदत्वस्य प्रकृतासम्बन्धादर्थभेदः, एवमिहापीति स्फुटयति॥ तत्रेत्यादिना॥ सत्यपदेन प्राणोक्तिरित्यत आह॥ तत्र सत्यमिति॥ विज्ञानं निदिध्यासनम्, कृत्यादिपदान्मननश्रद्धासाध्यश्रवणमननयुक्तिनिष्ठातत्त्वकर्माणि गृह्यन्ते। इमान्यपि श्रवणादीनि ध्येयस्य सत्यस्य ब्रह्मत्वे लिङ्गानि। एवं श्रुतिलिङ्गैर्वाक्यश्रावान्तरप्रकरणं बाधित्वा प्रस्तुतं सत्यं ब्रह्म भूमपदोक्तमखण्डत्वधर्मो-

सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमेत्युच्यत इति गम्यते। तस्मादपि प्राणादधिभूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति। एवमिहात्मविविदिषया प्रकरणस्योत्थानमुपपन्नं भविष्यति। प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते। न हि प्राणस्य मुख्यया वृत्त्याऽऽत्मत्वमस्ति। न चान्यत्र परमात्मज्ञानाच्छोकविनिवृत्तिरस्ति, "नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्यन्तरात्। "तं मा भगवान् शोकस्य पारं तारयतु" इति चोपक्रम्योपसंहरति "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति। तम इति शोकादिकारणमविद्योच्यते। प्राणान्ते चानुशासनेन प्राणस्यान्यायत्ततोच्येत। आत्मतः प्राण इति च ब्राह्मणम्। प्रकरणान्ते च परमात्मविवक्षा भविष्यति, भूमा तु प्राण एवेति चेन्न। "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इत्यादिना भूम्न एवाप्रकरणसमाप्तेरनुकर्षणात्। वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात् परमात्मनः सुतरामुपपद्यते॥

न्याह॥ तत्र यदीति॥ किञ्च सन्निहितादपि व्यवहितं साकाङ्क्षं बलीय इति न्यायेन सन्निहितं निराकाङ्क्षं प्राणं हित्वा वाक्योपक्रमस्थ आत्मा स्वप्रतिपादनाय भूमवाक्यापेक्ष इह भूमा ग्राह्य इत्याह॥ एवञ्चेति॥ किञ्च शोकस्य पारमित्युपक्रम्य तमसः पारमित्युपसंहारात् शोकस्य मूलच्छेदं विना तरणायोगाच्च। शोकपदेन मूलतमो लक्ष्यते तन्निवर्त्तकज्ञानगम्यत्वलिङ्गात्, आत्मा भूमेत्याह॥ न चान्यत्रेति॥ आत्मत आत्मा यतनं प्राणस्य वदतीति सम्बन्धः। ननु इदं चरमं ब्राह्मणं ब्रह्मपरमस्तु ततः प्रागुक्तो भूमा प्राण इति शङ्कते॥ प्रकरणान्त इति॥ तच्छब्देन भूमानुकर्षणात् नैवमित्याह॥ नेति॥ भूम्नो ब्रह्मत्वे लिङ्गा-

## धर्मोपपत्तेश्च ॥ ९ ॥

अपि च ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति दर्शनादिव्यवहाराभावं भूमन्यवगमयति परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतः, यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदिति श्रुत्यन्तरात्। योऽप्यसौ सुषुप्तावस्थायां दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्षया उक्तो न प्राणस्वभावविवक्षया, परमात्मप्रकरणात्। यदपि तस्यामवस्थायां सुखमुक्तं तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम्। यत आह एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति। इहापि यो वै भूमा तत् सुखं नाल्पे सुखमस्ति भूमैव सुखमिति सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति "यो वै भूमा तदमृतमिति"। अमृतत्वमपीह श्रूयमाणं परमकारणं गमयति, विकाराणाममृतत्वस्यापेक्षिकत्वात्, अतोऽन्यदार्त्तमिति च श्रुत्यन्तरात्। तथा च सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते

परमाह। धर्मेति। सूत्रे यदुक्तं भूम्नो लक्षणं सुखत्वममृतत्वञ्च प्राणेषु योज्यमिति तदनूद्य विघटयति। योऽप्यसावित्यादिना। सति सुषुप्त्युपाधावात्मनो द्रष्टृत्वादिस्तदभावे सुषुप्तौ तदभाव इत्यसङ्गत्वज्ञानार्थं प्रश्नोपनिषदि न शृणोति न पश्यतीति परमात्मानं प्रकृत्योक्तम्। तथा तत्रैवात्मनः सुखत्वमुक्तं न प्राणस्य। यत श्रुत्यन्तरं आत्मन एव सुखत्वमाह तस्मादित्यर्थः। आमयो नाशादिदोषः तत्सहितं सामयम्। आर्त्तं

धर्माः श्रूयमाणा परमात्मन्येवोपपद्यन्ते नान्यत्र तस्मात् भूमा परमात्मेति सिद्धम् ॥

## अक्षरमम्बरान्तधृतेः ॥ १० ॥

कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वित्यादि श्रूयते । तत्र संशयः किमक्षरशब्देन वर्ण उच्यते किं वा पर एवेश्वर इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात् प्रसिद्ध्यतिक्रमस्य चायुक्तत्वात्, ओंकार एवेदं सर्वमित्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मकत्वावधारणात् वर्ण एवाक्षरशब्द इति, एवं प्राप्ते उच्यते । पर एवात्माक्षरशब्दवाच्यः, कस्मादम्बरान्तधृतेः पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि पृथिव्यादेः समस्तस्य विकारजातस्य कालत्रयविभक्तस्याकाश एव तदोतञ्च प्रोतञ्चेत्याकाशे प्रतिष्ठितत्व मुक्त्वा कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यनेन प्रश्नेनेदमक्षर-

---

न्तरम् । स एवाधस्तात् स उपरिष्टादिति सर्वगतत्व, स एवेदं सर्वमिति सर्वात्मत्वञ्च श्रुत, तस्माद्भूमाध्यायो निर्गुणे समन्वित इति सिद्धम् ॥

अक्षरम् । बृहदारण्यके पठति कस्मिन्निति । यद्भूतं भवच्च भविष्यच्च तत्सर्वं कस्मिन्नोतमिति गार्ग्या पृष्टेन मुनिना याज्ञवल्क्येनाव्याकृताकाशं कार्य्यमात्राश्रय उक्ते? आकाशः कस्मिन्नोत इति द्वितीयप्रश्ने स मुनिरुवाच । तत् अव्याकृतस्याधिकरणमेतदक्षरम् अस्थूलादिरूपमित्यर्थः । उभयत्राक्षरशब्दप्रयोगात् संशयः । यथा सत्यशब्दो ब्रह्मणि रूढ इति ब्रह्म भूमेत्युक्तं तथाक्षरशब्दो वर्णे रूढ इति दृष्टान्तेन पूर्वपक्ष, तत्रोङ्कारोपास्ति फलम् । सिद्धान्ते निर्गुणब्रह्मधीरिति विवेकः । ननु न क्षरतीत्यक्षरत्वानाशित्वयोगात् ब्रह्मण्यक्षरशब्दो

मवतारितं, तथा चोपसंहृतमेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति। न चेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र सम्भवति। यदप्योङ्कार एवेदं सर्व्वमिति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात् स्तुत्यर्थं द्रष्टव्यम्। तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म। स्यादेतत् कार्य्यस्य चेत् कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते प्रधानकारणवादिनोऽपीयमुपपद्यते कथं अम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिरिति, अत उत्तरं पठति॥

## सा च प्रशासनात्॥ ११॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म्म, कस्मात् प्रशासनात्। प्रशासनं हीह श्रूयते एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादि। प्रशासनञ्च पारमेश्वरं कर्म्म नाचेतनस्य प्रशासनं सम्भवति। न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति॥

---

मुख्य इत्यत आह। प्रसिद्धिव्यतिक्रमश्चेति। रूढिर्योगमपहरतीति न्यायादित्यर्थः। वर्णस्योङ्कारस्य सर्व्वात्मत्वं कथमित्याशङ्क्य ध्यानार्थमिदं यथा श्रुत्यन्तरे सर्व्वात्मत्वमित्याह। ओँकार इति। प्रश्नप्रतिवचनाभ्याम् आकाशान्तजगदाधारत्वे तात्पर्य्यनिश्चयाच्च ध्यानार्थता, अतः ऽक्षरशब्दरूढिं बाधित्वा योगवृत्तिर्ग्राह्येति सिद्धान्तयति एवमित्यादिना। आकाशभूतं कृत्वा ब्रूते। स्यादेतदिति। चेतनकर्त्तृकमिव धृत्या [illegible] अत्र श्रुतेर्मैवमित्याह॥

सा चेति॥ सूत्रं व्याचष्टे। सा चेति॥ अक्षरस्य [illegible] भूतत्वनिरासार्थं। भूताकाशस्य कार्य्यान्तःपातित्वे श्रुतसर्व्वकार्य्याश्रयत्वायोगात् अव्याकृतमेवाकाशं प्रधानमस्त्विति तदाशङ्कानिरासार्थं न प्रधानमित्यर्थः। विधृतौ विधृतत्वेन स्थितौ।

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावव्यावृत्तेश्च कारणात् ब्रह्मैवाक्षरशब्दवाच्यं, तस्यैवाम्बरान्तधृतिः कर्म नान्यस्य कस्यचित् । किमिदमन्यभावव्यावृत्तेरिति । अन्यस्य भावोऽन्यभावस्तस्माद्व्यावृत्तिरन्यभाव व्यावृत्तिरिति । एतदुक्तं भवति यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तविधरणमक्षरं व्यावर्तयति श्रुतिः, "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ" इति । तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि सम्भवति, द्रष्टृत्वादिव्यपदेशस्तु न तस्य सम्भवत्यचेतनत्वात्, तथा नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रित्यात्मभेदप्रतिषेधात् न शारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम्, अचक्षुष्कमश्रोत्रमवागमन इत्युपाधिमत्त्वप्रतिषेधात् । न हि निरुपाधिकः शारीरो नाम भवति । तस्मात्परमेव ब्रह्माक्षरमिति निश्चयः ॥

## ईक्षतिकर्मव्यपदेशात् ॥ १३ ॥

एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वा-

प्रश्नपूर्वकं सूत्रं व्याकरोति । किमिदमिति । घटत्वात् व्यावृत्तिरिति भ्रान्तिं निरस्यति । एतदिति । अम्बरान्तस्याधारमक्षरं श्रुतिरचेतनत्वाद्व्यावर्तयतीत्यर्थः । जीवनिरासपरत्वेनापि सूत्रं योजयति । तथेति । अन्यभावो भेदः तन्निषेधादिति सूत्रार्थः । तर्हि बोधितो जीव एवाक्षरं न पर इत्यत आह । नहीति । बोधिते जीवत्वं नास्तीत्यर्थः । तस्मात् शार्गं ब्रह्म निर्गुणाक्षरे समन्वितमिति सिद्धम् ॥

ईक्षतिकर्मव्यपदेशात् सः । प्रश्नोपनिषद्वाक्यमुदाहरति । एतदिति ।

नैतेनैवायतनेनैकतरमन्वेतीति प्रकृत्य श्रूयते। यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीतेति। किमस्मिन् वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यते आहोस्विदपरमित्येतेनैवायतनेन परमपरञ्चैकतरमन्वेतीति प्रकृतत्वात् संशयः। तत्रापरमिदं ब्रह्मेति प्राप्तं, कस्मात् स तेजसि सूर्ये सम्पन्नः, स सामभिरुन्नीयते ब्रह्मलोकमिति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमानत्वात्। न हि परब्रह्मविद्देशपरिच्छिन्नफलमश्नुवीतेति युक्तं, सर्वगतत्वात् परस्य ब्रह्मणः। नन्वपरब्रह्मपरिग्रहे परं पुरुषमिति विशेषणं नोपपद्यते, नैष दोषः, पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः, इत्येवं प्राप्तेऽभिधीयते। परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते, कस्मात् ईक्षतिकर्मव्यप-

---

पिप्पलादो गुरुः सत्यकामेन पृष्टो ब्रूते, हे सत्यकाम। परं निर्गुणमपरं सगुणं ब्रह्मैतदेव योऽयमोङ्कारः, स हि प्रतिमेव विष्णोस्तस्य प्रतीकत्वात् प्रणवं ब्रह्मात्मना विद्वानेतेनैवोङ्कारध्यानेनायतनेन प्राप्तिसाधनेन यथाध्यानं परमपरं चान्वेति प्राप्नोतीति प्रकृत्य मध्ये एकमात्रद्विमात्रोङ्कारयोर्ध्यानमुक्त्वा ब्रवीति। य पुनरिति। इत्यनुवादकृतीया ब्रह्मोङ्कारयोरभेदोपक्रमात्। यो ह्यकारादिमात्रात्मके एकस्या मात्राया अकारस्य ऋगादिकं जाग्रदादिविभूतिञ्च जानाति तेन सम्यक् ज्ञाता एकमात्रा स ओङ्कारस्य स एकमात्रः। एवं मात्राद्वयस्य सर्व्वविभूतिज्ञाने द्विमात्रस्तथा त्रिमात्रः। तमोङ्कारं पुरुषं योऽभिध्यायीत स ओङ्कारविभूतिमेव ध्याते सामभिः सूर्य्यद्वारा ब्रह्मलोकं गत्वा परकाष्ठाम पुरुषम् ईक्षते इत्यर्थः। संशयं तद्बोजमाह। किमित्यादिना। अस्मिन् त्रिमात्रवाक्ये इत्यर्थः। पूर्व्वत्र पूर्व्वपक्षेणोक्ते ओङ्कारे बुद्धिस्थ ध्यातव्ये निर्णीयत इति सङ्गतिः। यद्वा पूर्व्वत्र वर्ण्णो कृतस्याक्षरमध्यस्य लिङ्गात् ब्रह्मापि इतिवत्क्वा तद्वदत्रापि ब्रह्मलोकप्राप्तिलिङ्गात्

देशात्। ईक्षतिर्दर्शनं दर्शनव्याप्यमीक्षतिकर्म, ईक्षतिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति, स एतस्माज्जीवघनात् परात्परं पुरुषं पुरिशयम् ईक्षत इति। अत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति मनोरथकल्पितस्यापि अभिध्यायतिकर्मत्वात्। ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते। स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते। नन्वभिध्याने परपुरुष उक्तः ईक्षणे तु परात्परः कथमितर इतरत्र प्रत्यभिज्ञायत इति, अत्रोच्यते। परपुरुषशब्दौ तावदुभयत्र साधारणौ। न चात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परपुरुषः परामृश्यते येन तस्मात् परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात्। कस्तर्हि जीवघन इत्युच्यते घना मूर्त्तिर्जीवलक्षणो घनो जीवघन

परब्रह्मणः हिरण्यगर्भे वृत्तिरिति दृष्टान्तेन पूर्वपक्षयति। तत्रापरमिति। कार्यपरब्रह्मणोरुपास्त्योरुभयत्र फलम्। स उपासकः। सूर्ये सम्पन्नः प्रविष्टः। ननु यद्वदान ईश्वर इति ध्यानात् विन्दते वशित्वमपि फलं ब्रह्मोपासकस्य श्रुतमित्यत आह। न क्षीणेति॥ अन्यत्र तथात्वेऽपि अत्र परवित् परमपरं विद्परमर्थतोऽस्य परविदोऽपरप्राप्तिरयुक्ता उपक्रमविरोधात् न चात्र परप्राप्तिरेवोक्तेति वाच्यं, परस्य सर्वगतत्वात्। अतएव प्राप्तिसम्बन्धेन सूर्यद्वारा गतिवैयर्थ्यात् उपक्रमानुरुद्धीतादपरप्राप्तिरूपाल्लिङ्गात्परं पुरुषमिति परश्रुतिर्बोध्यार्थं। परश्रुतेर्गतिं पृच्छति। नन्विति। पिण्डः स्थूलो विराट् तदपेक्षया सूक्ष्मस्य परत्वमिति समाधत्ते सूत्रे सपद ईश्वरपर इति प्रतिज्ञातत्वेन न व्याघातः। परमेवेति। स उपासक एतस्माद्धिरण्यगर्भात्परं पुरुष

सैन्धवखिल्यवत् यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति। अपर आह स सामभिरुन्नीयते ब्रह्मलोकमिति, अतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते। जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि सङ्घातोपपत्तेर्भवति ब्रह्मलोको जीवघनः, तस्मात् परो यः परमात्मेक्षणकर्मभूतः स एवाभिध्यानेऽपि कर्मभूत इति गम्यते। परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावकल्पते। परो हि पुरुषः परमात्मैव भवति यस्मात्परं किञ्चिदन्यन्नास्ति, पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिरिति च श्रुत्यन्तरात्। परश्चापरश्च ब्रह्म

ब्रह्माहमितीक्षत इत्यर्थः ॥ नन्वीक्षणविषयोऽप्यपरोऽस्तु तत्राह। तमभिध्यायतेरिति। नन्वीक्षणं प्रमात्वाद्विषयसत्यतामपेक्षत इति भवतु सत्यः पर ईक्षणीयः ध्येयस्तु तत्त्वतोऽपरः किं न स्यादित्यत आह। स एवेति। श्रुतिभ्यां प्रत्यभिज्ञानात् स एवायमिति सौत्रः सशब्दो व्याख्यातः। अत्रैव सूत्रयोजना, ओँकारेण यो ध्येयः स पर एवात्मा वाक्यशेषे ईक्षणीयत्वोक्तेः, अत्र च श्रुतिप्रत्यभिज्ञानात् स एवायमिति। ननु शब्दभेदात् न प्रत्यभिज्ञेति शङ्कते। नन्विति। परात्पर इति शब्दभेदम् अङ्गीकृत्य श्रुतिभ्यां तत्प्रत्यभिज्ञाया अविरोधमाह। अत्रेति। न चैतस्माज्जीवघनात् परादित्येतत्पदेनोपक्रान्तध्यातव्यपरामर्शादीक्षणीयः परात्मा ध्येयादन्य इत्यत आह। न चात्रेति। ध्यानस्य तत्फलेक्षणस्य च लोके समानविषयत्वाद्ध्येय एवेक्षणीयः। एवञ्चोपक्रमोपसंहारयोरैकवाक्यता भवतीति भावः। स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनादित्येतत्पदेन सन्निहिततरो ब्रह्मलोकस्वामी परा

यदोङ्कार इति च विभज्यानन्तरमोङ्कारेण परं पुरुषमभि-
ध्यातव्यं ब्रुवन् परमेव ब्रह्म परं पुरुषं गमयति । यथा पादो-
दरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्त इति
पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूच-
यति । अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नं
फलं युज्यत इति, अत्रोच्यते । त्रिमात्रेणोङ्कारेणालम्बनेन
परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्-
दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥

उच्यत इति प्रश्नपूर्वकं व्याचष्टे । कस्तर्हीत्यादिना । मूर्त्तो घन इति
स्थूलत्वादिति भावः । सैन्धवखिल्यो लवणपिण्डः खिल्यवदल्पो भावः
परिच्छेदो यस्य स खिल्यभावः । एतत्पदेन ब्रह्मलोको वा परा-
मृश्यत इत्याह । अपर इति । जीवघनशब्दस्य ब्रह्मलोके लक्षणां दर्श-
यति । जीवात्मा हीति । व्यष्टिकरणाभिमानिना जीवात्मा घनः
सङ्घातो यस्मिन् सर्वकरणाभिमानिनि स जीवघनः तत्स्वामिकत्वात् पर-
म्परासम्बन्धेन लोको लक्ष्य इत्यर्थः । तस्मात्परः सर्वलोकातीतः शुद्ध
इत्यर्थः । परपुरुषशब्दस्य परमात्मनि मुख्यत्वात्स एव ध्येय इत्याह ।
परमिति । यस्मात्परं नापरमस्ति किञ्चित् स एव मुख्यः परः न तु
पिण्डात्परः सूत्रात्मेत्यर्थः । किञ्च परशब्देनोपक्रमे निश्चितं परं ब्रह्मै-
वात्र वाक्यशेषे ध्यातव्यमित्याह । परञ्चापरञ्चेति । पापनिवृत्तिलिङ्गा-
च्चेत्याह ॥ यथेति । पादोदरः सर्पः । ओँकारे परब्रह्मोपासनया सूर्य-
द्वारा ब्रह्मलोकं गत्वा परब्रह्मेक्षित्वा तदेवात्मत्वेन प्राप्नोतीत्यविरोध-
माह । अत्रोच्यत इति ॥ एवमेकवाक्यतासमर्थप्रकरणानुगृहीतपरपुरुष-
श्रुतिभ्यां परब्रह्मप्रत्यभिज्ञया ब्रह्मलोकप्राप्तिलिङ्गं बाधित्वा वाक्यं प्रणव-
ध्येये ब्रह्मणि समन्वितमिति सिद्धम् ॥

## दहर उत्तरेभ्यः ॥ १४ ॥

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यम् इत्यादि वाक्यं समाम्नायते। तत्र योऽयं दहरे हृदयपुण्डरीके दहर आकाशः श्रुतः स किम्भूताकाशोऽथ विज्ञानात्माथवा परमात्मेति संशय्यते। कुतः संशयः, आकाशब्रह्मपुरशब्दाभ्याम्। आकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च ब्रह्मणि प्रयुज्यमानो दृश्यते। तत्र किम्भूताकाश एव दहरः स्यात् किं वा पर इति संशयः। तथा ब्रह्मपुरमिति किं जीवोऽत्र ब्रह्मनामा तस्येदं पुरं शरीरं ब्रह्मपुरमथ वा परस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति। तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो दहराकाशत्वे संशयः। तत्राकाशशब्दस्य भूताकाशे रूढत्वाद्भूताकाश एव दहर इति प्राप्तं, तस्य च दहरायतनापेक्षया

दहर उत्तरेभ्यः। छान्दोग्यमुदाहरति। अथेति। भूमविद्यानन्तरं दहरविद्यारम्भार्थोऽथशब्दः। ब्रह्मणोऽभिव्यक्तिस्थानत्वात् ब्रह्मपुरं शरीरम् अस्मिन् यदर्पितं दहरमल्पं हृत्पद्मं तस्मिन् हृदये यदन्तराकाशवच्छिन्नं ब्रह्म तदन्वेष्टव्यं विचार्य ज्ञेयमित्यर्थः। अत्राकाशो जिज्ञास्यस्तदन्तःस्थं वेति प्रथमः संशयः कल्प्यः। तत्र यद्याकाशस्तदा संशयद्वयम्। तत्राकाशशब्दादेकं संशयमुक्त्वा ब्रह्मपरशब्दात् संशयान्तरमाह। तथा ब्रह्मपुरमितीति। अत्र शब्दे जीवस्य ब्रह्मणो वा पुरमिति संशयः। तत्र तस्मिन् संशये सतीति योजना। परपुरुषशब्दस्य ब्रह्मणि रूढत्वात् ब्रह्म ध्येयमित्युक्तम्। तदेतदाकाशपदस्य भूताकाशे रूढत्वाद्भूताकाशो ध्येय इति दृष्टान्तेन पूर्वपक्षयति। तत्राकाशेत्यादिना। दहरवाक्यस्यानन्तरप्राजापत्यवाक्यस्य च संगुणे

दहरत्वं, यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति च बाह्याभ्यन्तरभावकृतभेदस्योपमानोपमेयभावो द्यावापृथिव्यादि च तस्मिन्नन्तःसमाहितमवकाशात्मनाकाशस्यैकत्वात् । अथ वा जीवो दहर इति प्राप्तं ब्रह्मपुरशब्दात्, जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते । तस्य स्वकर्मणोपार्जितत्वात् । भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वम् । न हि परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः सम्बन्धोऽस्ति । तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः, मनउपाधिकश्च जीवो मनश्च प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयान्तरवस्थानं स्यात् । दहरत्वमपि तस्यैवाराग्रोपमितत्वादवकल्पते । आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति । न चात्र दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रूयते, तस्मिन् यदन्तरिति परविशेषणत्वेनोपादानादिति, अत

निर्गुणे च समन्वयोक्तेः श्रुत्यादिसङ्गतयः । पूर्वपक्षे भूताकाशाद्युपास्तिः सिद्धान्ते सगुणब्रह्मोपास्त्या निर्गुणधीरिति फलभेदः । न चाकाशस्तल्लिङ्गादित्यनेन पुनरुक्तता शङ्कनीया । अत्र तस्मिन् यदन्तस्तदन्वेष्टव्यमित्याकाशान्तःस्थस्यान्वेष्टव्यत्वादिलिङ्गान्वयेन दहराकाशस्य ब्रह्मत्वे सन्देहाभावात् । ननु भूताकाशस्यात्मत्वाच्च कथमेकस्योपमानत्वम् उपमेयत्वञ्च कथम् उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्चेत्यादिना श्रुतसर्वाश्रयत्वञ्च कथमित्याशङ्क्य क्रमेण परिहरति । तस्मिन्नित्यादिना । हृदयापेक्षया बाह्यस्य भूताकाशस्य कल्पितभेदात् साम्यं, स्वत एकत्वात् सर्वाश्रयत्वमित्यर्थः । नन्वेष आत्मेत्यात्मशब्दो भूते न युक्त इत्यरुचेराह । अथ वेति । भक्त्येति । गौणवृत्त्या लक्षणयोगेनेत्यर्थः । मुख्यं ब्रह्म दहरत्वमित्यत आह । न हीति । अस्तु पुरस्वामी जीवो

मेयभावः सम्भवतीत्युक्तम्। नैवं सम्भवति। अगतिका हीयं गतिर्यत् काल्पनिकभेदाश्रयणम्। अपि च कल्पयित्वा भेद-मुपमानोपमेयभाव वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न वाह्याकाशपरिमाणत्वमुपपद्यते। ननु परमेश्वरस्यापि ज्याया-नाकाशादिति श्रुत्यन्तरान्नैवाकाशपरिमाणत्वमुपपद्यते, नैष दोषः, पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न ता-वत्त्वप्रतिपादनपरत्वम्। उभयप्रतिपादनेऽपि वाक्यं भिद्येत। न च कल्पितभेदे पुण्डरीकवेष्टिते आकाशैकदेशे द्यावापृथि-व्यादीनामन्तःसमाधानमुपपद्यते। एष आत्मापहतपाप्मा वि-जरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यस-ङ्कल्प इति चात्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे सम्भवन्ति। यद्यप्यात्मशब्दो जीवे सम्भवति तथापीतरेभ्यः कार-

---

त्वतः किं तदत्मत्वे विद्यते यद्विचार्यं ज्ञेयमिति, तदा स आचार्यो भ्याद्राकाशस्याल्पतानिवृत्तिमित्यर्थं। वाक्यस्य तात्पर्यमाह। तत्रेति। निवर्तयति आचार्य इति शेषः। नन्वाकाशशब्देन रूढ्या भूताकाशस्य भानात् कथं तन्निवृत्तिरित्याशङ्क्याह। यद्यपीति। ननु रामरावणयो-र्युद्धं रामरावणयोरिवेत्यभेदेऽप्युपमा दृष्टेति चेत् न, अभेदे वाक्यस्या-नन्वयेन युद्धस्य निरुपमत्वे तात्पर्यात् अनन्वयालङ्कार इति काव्यविदः। मूर्खोक्तमनूद्य निरस्यति। नन्वित्यादिना। सीतासिद्ध इवाभाति कौ-दण्डप्रभया युत इत्यादौ प्रभायोगसीत.... पदपविशेषणभेदाभेदाश्रयण-मेकस्यैव श्रीरामस्योपमानोपमेयभावविधानं कृतम्। अतविषमदाहरणम् दृष्टत्व नैवमत्राश्रयणं युक्तम् वाक्यस्याल्पत्वनिवृत्तिपरत्वेन गतिसद्भावात्। किञ्च हार्दाकाशस्य.....परत्वत्यागे अल्पत्वेन आपन्नवाह्याकाशसाम्यम् न युक्तमित्याह। अपि चेति। आन्तरत्वत्यागे तु अत्यन्ताभेदात् वाह्य

बोध्यो जीवाशङ्कापि निवर्त्तिता भवति । न ह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्त्तयितुं ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्यत इति चेत् यदात्मतया जीवस्य सर्व्वगतत्वादि विवक्ष्यते तस्यैव ब्रह्मणः साक्षात् सर्व्वगतत्वादि विवक्ष्यतामिति युक्तम् । यदप्युक्तं ब्रह्मपुरमिति जीवेन पुरस्योपलक्षितत्वाद्राज्ञ इव जीवस्यैवेदं पुरस्वामिनः पुरैकदेशवर्त्तित्वमस्तीत्यत्र ब्रूमः । परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते ब्रह्मशब्दस्य तस्मिन् मुख्यत्वात् । तस्याप्यस्ति पुरेणानेन सम्बन्ध उपलब्ध्यधिष्ठानत्वात् । स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते, स वा अयं पुरुषः सर्व्वासु पूर्षु पुरिशय इत्यादिश्रुतिभ्यः । अथ वा जीवपुरे एवास्मिन् ब्रह्म सन्निहितमुपलभ्यते । यथा सालग्रामे

मिति भावः । ननु हार्दाकाशस्याल्पत्वनिवृत्तौ तावच्चे च तात्पर्यं किं न स्यादित्यत आह । उभयेति । अतोऽल्पत्वनिवृत्तावेव तात्पर्यमिति भावः ॥

एवमाकाशोपमितत्वाद्दहराकाशो न भूतमित्युक्तम् सर्व्वाश्रयत्वादिलिङ्गेभ्यश्च तथेत्याह । न चेत्यादिना । विगता जिघत्सा जग्धुमिच्छा यस्य सोऽयं विजिघत्सः बुभुक्षाशून्य इत्यर्थः । प्रथमश्रुतब्रह्मशब्देन तत्सापेक्षचरमश्रुतषष्ठीविभक्त्यर्थः सम्बन्धो नेयः न तु ब्रह्मणः पुरमिति षष्ठ्यर्थः स्वस्वामिभावो ग्राह्यः । निरपेक्षेण तत्सापेक्षं बाध्यमिति न्यायादित्याह । अत ब्रूम इति । शरीरस्य ब्रह्मणा तदुपलब्धिस्थानत्वरूपे सम्बन्धे मानमाह । स इति । पूर्षु शरीरेषु, पुरि हृदये शय इति पुरुष इत्यन्वयः । ननु ब्रह्मशब्दस्य जीवेऽप्यक्षरादिना शरीरब्रह्मेतौ तुल्यत्वात् षष्ठ्यर्थः कथञ्चिन्नेय इत्यत आह । अथ वेति । बृंहयति देहमिति ब्रह्म जीवः तत्स्वामिके पुरे, हृदये ब्रह्मणोऽस्य भवतु राजपुरे मैत्रसद्मवदित्यर्थः ।

विष्णुः सन्निहित इति तद्वत्। तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयत इति च कर्मणामन्तवत्फलत्वमुक्त्वाथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवतीति प्रकृतदहराकाशविज्ञानस्यानन्तफलत्वं वदन् परमात्मत्वमस्य सूचयति। यदप्येतदुक्तं न दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वञ्च श्रुतं परविशेषणत्वेनोपादानादित्यत्र ब्रूमः। यद्याकाशो नान्वेष्टव्यत्वेनोक्तः स्यात् यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इत्याद्याकाशस्वरूपप्रदर्शनं नोपयुज्येत। नन्वेतदप्यन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव प्रदर्श्यते तञ्चेद् ब्रूयुः, यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमित्याक्षिप्य परिहारावसरे आकाशौपम्योपक्रमेण द्यावापृथिव्यादीनामन्तःसमाहितत्वदर्शनात् नैतदेवम्। एवं हि

अनन्तफलविज्ञानादपि दहरः परमात्मेत्याह। तद्यथेति। अथ कर्मफलाद्वैराग्यानन्तरमिह जीवदवस्थायामात्मानं दहरं तदाश्रितांश्च सत्यकामादिगुणान् आचार्योपदेशमनुविद्य ध्यानेनानुभूय परलोकं गच्छन्ति तेषां सर्वलोकेष्वनन्तमैश्वर्यं स्वेच्छया सञ्चरणादिकं भवतीत्यर्थः। दहरे उक्तलिङ्गान्यन्यथासिद्धानि तेषां मतेन स्वगुणत्वादियुक्तं धारयित्वा दूषयति। यदपीत्यादिना। उक्तमनाकाशस्वरूपप्रतिपादनमन्यथानुपपत्त्या पूर्वं सतोऽन्वेष्यत्वादिकमित्यत्रान्यथोपपत्तिं शङ्कते। नन्विति। एतदाकाशस्वरूपं आक्षेपबीजमाकाशस्याल्पत्वशङ्कां निरस्यान्तःस्थवस्तुसद्भावस्यैव ध्येयत्वार्थम्। तर्हि जगदेव ध्येयं स्यादित्याह। नैतदेवमिति। प्रकृतौ दोषमाह। तत्रेति। सर्वाश्रयत्वं दहराकाशगुणत्वाद्भा-

सति यदन्तःसमाहितं द्यावापृथिव्यादि तदन्वेष्टव्यं विजिज्ञासितव्यञ्चोक्तं स्यात्। तत्र वाक्यशेषो नोपपद्येत। अस्मिन् कामाः समाहिताः एष आत्मापहतपाप्मा इति हि प्रकृतं तत् द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्याथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामानिति समुच्चयार्थेन चशब्देनात्मानञ्च कामाधारमाश्रितांश्च कामान् विज्ञेयान् वाक्यशेषो दर्शयति। यस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तःस्थैः समाहितैः पृथिव्यादिभिः सत्यैः कामैः विज्ञेय उक्त इति गम्यते। स चोक्तेभ्यो हेतुभ्यः परमेश्वर इति॥

## गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च ॥ १५ ॥

दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम्। त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्ते। इतश्च परमेश्वर एव दहरो यस्मात् दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ

त्वादिगुणात्मना गुणी सह तत्रैव ध्येयत्वं वाक्यशेषो ब्रूते, तद्विरोध इत्यर्थः। तस्मिन् यदन्तरिति तत्पदेन व्यवहितमपि हृदयं योग्यतया ग्राह्यमित्याह। तस्मादिति। यद्वा आकाशतस्मिन् यदन्तस्तदुभयमन्वेष्टव्यमिति योजनां सूचयति। सहान्तःस्थैरिति॥

दहराकाशस्य ब्रह्मत्वे हेत्वन्तरमाह। गतीति। प्रजा जीवा एतं हृदयस्थं दहरं ब्रह्मरूपं लोकमहरहः स्वापे गच्छन्त्यस्तदात्मना स्थिता अनृतेनाज्ञानेनापिहितास्तं न जानन्ति अतः शुद्धब्रह्मत्वमित्यर्थः। ननु तूष्णीपदपरामृष्टदहरस्य स्वापे जीवगम्यत्वेऽपि ब्रह्मत्वे किमायात-

भवतः । इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति, तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानाम् अभिधीयमाना दहरस्य ब्रह्मतां गमयति। तथा ह्यहरहर्जीवानां सुषुप्तावस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे सता सोम्य तदा सम्पन्नो भवतीत्येवमादौ। लोकेऽपि किल गाढं सुषुप्तमाचक्षते ब्रह्मीभूतो ब्रह्मतां गत इति। तथा ब्रह्मलोकशब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशाशङ्कां निवर्त्तयन् ब्रह्मतामस्य गमयति। ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत्, गमयेद्यदीदं ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्येत। सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति। एतदेव चाहरहर्ब्रह्मलोक-

लिङ्गाशङ्क्य तथा हि दृष्टमिति व्याचष्टे। तथा हीति। लोकेऽपि दृष्टमित्यर्थान्तरमाह। लोकेऽपीति। गतिलिङ्गं व्याख्याय शब्दं व्याचष्टे। तथेति। जीवभूताकाशयोर्ब्रह्मलोकशब्दस्याप्रसिद्धेरिति भावः। ब्रह्मण्यपि तस्याप्रसिद्धिं शङ्कते। नन्विति। निषादस्थपतिन्यायेन समाधत्ते गमयेदिति। षष्ठे चिन्तितं स्थपतिर्निषादः शब्दसामर्थ्यात्। रौद्रीमिष्टिं विधाय एतया निषादस्थपतिं याजयेदित्याम्नायते। तत्र निषादानां स्थपतिः स्वामीति षष्ठीसमासेन त्रैवर्णिको याज्यः, अग्निविद्यादिसामर्थ्यात् न तु निषादश्चासौ स्थपतिरिति कर्मधारयेण निषादो याज्योऽसामर्थ्यादिति प्राप्ते सिद्धान्तः। निषाद एव स्थपतिः स्यात् निषादशब्दस्य निषादे श्रुतत्वात्, तस्याश्रुतवर्णत्रयसम्बन्धलक्षणायोगात् षष्ठीद्वितीयाविभक्त्योः पूर्वपदस्यान्यत्र लक्षणायां बाधकात् अतो निषादस्यैव विद्यासामर्थ्यं कल्प्यमिति तद्वद् ब्रह्मलोकशब्दे कर्मधारय इत्यर्थः।

गमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम्। न ह्यहरहरिमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम्॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः॥ १६ ॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः कथं दहरोऽस्मिन्नन्तराकाश इति हि प्रकृत्याकाशौपम्यपूर्वकं तस्मिन् सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्दं प्रयुज्यापहतपाप्मत्वादिगुणयोगञ्चोपदिश्य तमेवानतिवृत्तप्रकरणं निर्दिशत्यथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदायेति। तत्र विधृतिरित्यात्मशब्दसामानाधिकरण्याद्विधारयितोच्यते, क्तिचः कर्तरि स्मरणात्। यथोदकसन्तानस्य विधारयिता लोके सेतुः क्षेत्रसम्पदामसम्भेदायैवमयमात्मा एषामध्यात्मादिभेदभिन्नानां लोकाना

कर्मधारये लिङ्गमस्तीति व्याचष्टे। एतदेवेति। सूत्रे चकार उक्तन्यायसमुच्चयार्थः।

सर्वजगद्धारणलिङ्गाद्दहर पर इत्याह। धृतेरिति। नन्वथशब्दाद्दहरप्रकरणं विच्छिद्य स्मृता धृतिर्न दहरलिङ्गमिति शङ्कते। कथमिति। य आत्मेति प्रकृतापकर्षात् अथशब्दो दहरस्य धृतिगुणविधिप्रारम्भार्थ-माह दहरोऽस्मिन्नित्यादिना। श्रुतौ विधृतिशब्दः कर्तृवाचित्वात् क्तिजन्तः स्मृतः। सूत्रे तु महिमशब्दसामानाधिकरण्यात् धृतिशब्दः क्तिन्नन्तो विधारणे भूते, स्त्रियां क्तिन्निति भावे क्तिन्नो विधानादिति विभागः। सेतुरुपकरणेन, विधृतिस्तु स्थितिहेतुरित्यपौनरुक्त्यमाह। यथोदकेति।

वर्णाश्रमादीनाञ्च विधारयिता सेतुरसम्भेदायासङ्करायेति । एवमिह प्रकृते दहरे विधरणलक्षणं महिमानं दर्शयति, अयञ्च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादेः । तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधारण एषां लोकानाम सम्भेदायेति । एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥

प्रसिद्धेश्च ॥ १७ ॥

इतश्च परमेश्वर एव दहरोऽस्मिन्नन्तराकाश इत्युच्यते । यत्कारणमाकाशशब्दः परमेश्वरे प्रसिद्धः । आकाशो वै नाम नामरूपयोर्निर्वहिता, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त इत्यादिप्रयोगदर्शनात् । जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते । भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धौ उपमानोपमेयभावाद्यसम्भवान्न ग्रहीतव्य इत्युक्तम् ॥

सूत्रं योजयति । एवमिहेति । धृतेश्च दहरः परः अस्य धृतिरूपस्य नियमनस्य च महिम्नोऽस्मिन् परमात्मन्येव श्रुत्यन्तरे उपलब्धेरिति सूत्रार्थः । धृतेश्चेति चकारात् सेतुपदोक्तविधारकत्वलिङ्गं ग्राह्यम् तत्र नियमने श्रुत्यन्तरोपलब्धिमाह । एतस्येति । धृतौ तामाह । तथेति । आसमन्तात् काशते दीप्यते इति स्वयं ज्योतिषि ब्रह्मण्याकाशशब्दस्य विभुत्वगुणतो वा प्रसिद्धिः प्रयोगप्राचुर्यम् ॥

## इतरपरामर्शात् स इति चेन्नासम्भवात् ॥१८॥

यदि वाक्यशेषबलेन दहर इति परमेश्वरः परिगृह्येतास्तीतरस्यापि जीवस्य वाक्यशेषे परामर्शः। अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचेति। अत्र हि सम्प्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वात्तदवस्थावन्तं जीवं शक्नोत्युपस्थापयितुं नार्थान्तरम्। तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात् समुत्थानं सम्भवति। यथाकाशव्यपाश्रयाणां वाय्वादीनामाकाशात् समुत्थानं तद्वत्। यथा चादृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारादाकाशो वै नाम नामरूपयोर्निर्वहितेत्येवमादौ परमेश्वरविषयोऽभ्युपगतः, एवं जीवविषयोऽपि भविष्यति। तस्मादितरपरामर्शात् दहरोऽस्मिन्नन्तराकाश इत्यत्र स एव जीव उच्यते इति चेत्,

यदि एष आत्मापहतपाप्मेत्यादिवाक्यशेषबलेन दहरः परस्तर्हि जीवोऽपीत्याशङ्क्य निषेधति। इतरेति। जीवस्य वाक्यशेषमाह। अथेति। दहरोऽस्मिन्नन्तर इत्युपक्रम्य शृणु मयोच्यते, स एष सम्प्रसादो जीवोऽस्मात् कार्यकारणसङ्घात् सम्यगुत्थाय आत्मानं तस्माद्विविच्य विविक्तमात्मानं स्वेन ब्रह्मरूपेणाभिनिष्पद्य साक्षात्कृत्य तदेव सत्यं परं ज्योतिरुपसम्पद्यते प्राप्नोतीति व्याख्येयम्। यथा सुखं आदाय स्वपितीति वाक्यं सुप्त्वा सुखं आदत्ते इति व्याख्यायते तद्वत्। ज्योतिषोऽनात्मत्वं निरस्यति। एष इति। सम्प्रसादादेव आवर्तितेति श्रुत्यन्तरम्। अवस्थावदुत्थानमपि जीवस्य लिङ्गमित्याह। तथेति। तदाश्रितस्य तस्मात् समुत्थाने दृष्टान्तः। यथेति। ननु क्वाप्याकाशशब्दो जीवे न दृष्ट इत्याशङ्क्याकाशस्योत्थानलिङ्गबलात् कल्प्य इत्याह। यथा चेति। नियामकाभावाज्जीवो दहरः किं

नैतदेव स्यात्, कस्मादसम्भवात्। न हि जीवो बुद्ध्याद्युपाधिपरिच्छेदाभिमानी सन्नाकाशेनोपमीयते। न चोपाधिधर्माननभिमन्यमानस्यापहतपाप्मत्वादयो धर्माः सम्भवन्ति। प्रपञ्चितश्चैतत् प्रथमे सूत्रे, अतिरेकाशङ्कापरिहाराय तु पुनरुपन्यस्तम्। पठिष्यति चोपरिष्टादन्यार्थश्च परामर्श इति [सू०१।३।२०]॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

इतरपरामर्शाद्या जीवाशङ्का जाता सा असम्भवात् निराकृता। अथेदानीं मृतस्यैवामृतसेकात् पुनः समुत्थानं जीवाशङ्कायाः क्रियते उत्तरस्मात् प्राजापत्याद्वाक्यात्। तत्र हि 'य आत्मापहतपाप्मे'त्यपहतपाप्मत्वादिगुणकम् आत्मानमन्वेष्टव्यं

---

न स्यादिति प्राप्ते नियामकमाह। नैतदित्यादिना। दहरे श्रुतधर्माणामसम्भवात् न जीवो दहर इत्यर्थः तर्हि पुनरुक्तिस्तत्राह। अतिरेकेति। उत्तराच्चेदित्यधिकाशङ्कानिरासार्थमित्यर्थः। का तर्हि जीवपरामर्शस्य गतिस्तत्राह। पठिष्यतीति। जीवस्य स्वापस्थानभूतब्रह्मज्ञानार्थोऽयं परामर्श इति वक्ष्यते॥

असम्भवादिति हेतोरसिद्धिमाशङ्क्य परिहरति। उत्तराच्चेदिति सूत्रम्। निराकृताया जीवाशङ्कायाः प्रजापतिवाक्यबलात् पुनः समुत्थानं क्रियते जीवस्यैवापहतपाप्मत्वादिरूपेणाविर्भावाभिधेरित्यर्थः, कथं तत्र जीवोक्तिस्तत्राह। तत्रेत्यादिना। यद्यप्युपक्रमे जीवशब्दो नास्ति तथाप्यपहतपाप्मत्वादिगुणकमात्मानमुपक्रम्य तस्य जाग्रदा-

विजिज्ञासितव्यश्च प्रतिज्ञाय य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति च तमेव पुनः पुनः परामृश्य, य एष स्वप्ने महीयमानश्चरत्येष आत्मेति। तद्यत्रैतत् सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्येष आत्मेति च जीवमेवावस्थान्तरगतं व्याचष्टे। तस्यैव चापहतपाप्मत्वादि दर्शयत्येतदमृतमभयमेतद् ब्रह्मेति। नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानीति च सुषुप्तावस्थायां दोषमुपलभ्य एतं त्वेव ते भूयोऽनुव्याख्यास्यामि इति नो एवा-

चतुरवस्थात्मद्योपन्यासादवस्थालिङ्गेन जीवनिश्चयात्तस्यैव ते गुणाः सम्भवन्तीति समुदायार्थः। इन्द्रं प्रजापतिर्ब्रूते। य एष इति। प्राधान्यादक्षिपदेन सर्वैरिन्द्रियैर्विषयदर्शनरूपजाग्रदवस्थापन्नमित्याह। द्रष्टारमिति। महीयमानो वासनामयैर्विषयैः पूज्यमान इति स्वप्नपर्याये, तद्यत्रेति, सुषुप्तिपर्याये च जीवमेव प्रजापतिर्व्याचष्टे इत्यन्वयः। यत्र काले तदेतत् स्वप्नं यथा स्यात् तथा सुप्तः सम्यक् अस्तो निरस्तः करणग्रामो यस्य स समस्तः, अत एवोपहृतकरणत्वात्तत्कृतकालुष्यहीनः सम्प्रसन्नः, स्वप्नं प्रपञ्चमज्ञानमात्रत्वेन विलापयति अतोऽज्ञानरूपत्वात् सुप्ताद्भिन्नस्वरूपमात्र एष सर्वचैतन्येन करणशरीरसाक्षी तस्य साक्ष्यस्य सत्तास्फूर्तिप्रदत्वादात्मेत्यर्थः। चतुर्थपर्याये प्रश्नोक्तेः तस्यैवापहतपाप्मत्वादिगुणा इत्याशङ्क्य तत्रापि पर्यायेऽस्य जीवत्वमाह। नाहेति। अहेति निपातः खेदार्थे। खिद्यमानो हीन्द्र उवाच खलु सुप्तः पुमानयं सम्प्रति सुषुप्त्यवस्थायामयं देवदत्तोऽयमस्मीत्येवमात्मानं न जानाति। नो एव नैवेमानि भूतानि जानाति किन्तु विनाश एव प्राप्तो भवति। नाहमत्र भोग्यं पश्यामि इति दोषमुपलभ्य पुनः प्रजापतिमुपससार। तं दोषं श्रुत्वा प्रजा-

न्यत्वैतंदस्यादिति चोपक्रम्य शरीरसम्बन्धनिन्दापूर्वकमेष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति जीवमेव शरीरात् समुत्थितम् उत्तम पुरुषं दर्शयति। तस्माद्स्ति सम्भवति जीवे पारमेश्वराणां धर्माणाम्, अतो दहरोऽस्मिन्नन्तराकाश इति जीव एवोक्त इति चेत् कश्चिद्ब्रूयात् तं प्रतिब्रूयादाविर्भूतस्वरूपस्त्विति। तुशब्दः पूर्व्वपक्षव्यावृत्त्यर्थो नोत्तरस्मादपि वाक्यादिह जीवस्याशङ्का सम्भवतीत्यर्थः। कस्माद्यतस्तत्रापि आविर्भूतस्वरूपो जीवो विवक्ष्यते। आविर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः, भूतपूर्वगत्या जीववचनम्। एतदुक्तं भवति। य एषोऽक्षिणीत्यक्षिलक्षितं द्रष्टारं निर्दिश्योदशरावब्राह्मणेनैनं शरीरात्मताया व्युत्थाप्यैतं त्वेव त इति पुनः पुनस्तमेव व्याख्येयत्वेनाकृष्य स्वप्नसुषुप्तोपन्यासक्रमेण परं ज्योति-

पतिराह। एतमिति। एतस्मात् प्रकृतादात्मनोऽन्यत्वाभ्य न व्याख्यास्यामीत्युपक्रम्य मघवन्मर्त्यं वा इदं शरीर इति निन्दापूर्वकं जीवमेव दर्शयतीत्यर्थः। तस्मात् प्रजापतिवाक्यात्। अत सम्भवाविद्धे। सिद्धान्तयति। त प्रतीति। अवस्थात्रयाक्षोधनेनाविर्भूत शोधितत्वमर्थस्य वाक्यात्यस्यभिव्यक्तमित्यर्थः। तर्हि सूत्रे पुंलिङ्गेन जीवोक्तिः कथं ज्ञानेन जीवत्वस्य निवृत्तत्वादित्यत आह। भूतपूर्वेति। ज्ञानात् पूर्वमविद्या तत्कार्यप्रतिबिम्बितत्वरूप जीवत्वमभूदिति कृत्वा ज्ञानानन्तरं ब्रह्मरूपोऽपि जीवनाम्नोच्यत इत्यर्थः। विश्वतैजसप्राज्ञतुरीयपर्य्यायचतुष्टयात्मकप्रजापतिवाक्यस्य तात्पर्यमाह। एतदिति। जलमनाथवचनात् प्रतिबिम्बवदुदविम्बदेहो नात्मेति ज्ञापनार्थं प्रजापतिरिन्द्रविरोचनौ प्रत्युवाचोदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे ब्रूत-

